॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

७४



महाकवि-भारविविरचितं

# किरातार्जुनीयम्

महोपाध्यायश्रीमल्लिनाथसूरिकृतया 'घण्टापथ'-व्याख्यया
पण्डितश्रीगङ्गाधरशर्मकृतया 'सुधा'-व्याख्यया च
समलङ्कृतम् ।

( परीक्षोपयोगिद्वितीयसर्गात्मकम् )




चौखम्भा संस्कृत संस्थान
भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा विक्रेता
पो० आ० चौखम्भा, पो० बा० नं० ११९
जड़ाव भवन के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

२०३३ ] प्रत्येक सर्ग मूल्य रु० [ ई० १९७६

# हिन्दी-कथासार

## द्वितीय सर्ग

### युधिष्ठिर के प्रति भीम की उक्ति

इस प्रकार द्रौपदी को अपने मनोनुकूल बातें सुनकर भीम युधिष्ठिर से बोले हे महाराज! द्रौपदी ने इस समय जो कहा वह उचित कहा, स्त्री की कही हुई समझ आपको इसकी उपेक्षा करना उचित नहीं है। यदि अवधि की प्रतीक्षा करते रहियेगा निश्चय समझिये कि दुर्योधन इतने दिन तक राज्यसुख भोगकर आपको अवधि बीतने राज्य दे देगा यह असम्भव है। अतः आलस्य छोड़कर पुरुषार्थ कीजिए।

इस भांति अत्यन्त क्रुद्ध भीमसेन की बातें सुनकर मतवाले हाथी की भाँति ‹ धीरे २ शान्त करने के लिए महाराज युधिष्ठिर चेष्टा करते हुए बोले—

### भीम के प्रति युधिष्ठिर की उक्ति

हे भीम! तुमने जो कुछ कहा, वह ठीक है, तथापि मेरा मन विचारपूर्वक क करने को कहता है क्योंकि असमय में क्रोध करना अत्यन्त अनुचित है। यदि इस स‹ नियम तोड़कर चढ़ाई न की जाय तो जितने राजा हैं वे सब अवधि के बाद हम सहायता करेंगे। अहङ्कारी मनुष्य की सेवा में जो लोग रहते हैं वे लोग जब समय पड़ है तब उसे छोड़ देते हैं, क्योंकि उसके दुर्व्यवहार से मन में सभी अप्रसन्न रहते हैं। अ जब तक अवधि है तब तक शान्ति के साथ समय बिताना उचित है। इस प्रकार से‹ युधिष्ठिर भीम को समझा रहे थे, ठीक उसी समय दैवात् व्यास जी पहुँच गये। उ देखते ही सब ने उठकर स्वागत किया तथा आदर से लाकर उच्च आसन पर बैठाय पश्चात् स्वयं भी आज्ञा पाकर हाथ जोड़कर सम्मुख बैठ गये।

॥ श्रीः ॥

# किरातार्जुनीयम्

## 'घण्टापथ'-'सुधा'-व्याख्याद्वयोपेतम्



## प्रथमः सर्गः

कृत-दाम्पत्यमपि गाढानुरागि यत्। पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः॥
जगदालम्बं हेरम्बचरणाम्बुजम्। शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः॥
व्ययं धाम सारस्वतमुपास्महे। यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसच्छटाः॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः॥

मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति॥

नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥

ानिबन्धविषमैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम्।
प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये॥

मुखेनैव सर्वं व्याख्यायते मया। नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते॥

तत्रभवान् भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेत-
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे'॥ इत्याद्यालङ्कारिकवचन-
त्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्र-
व्यविषयतां च पश्यन्किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षिता-
परिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तु-

निर्देशो वाऽपि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वा वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

श्रिय इति । आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नात्रातीवोपयुज्यते । त(दु)क्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपि(तो) गणतोऽपि वा' इति । कुरूणां निवासाः कुरवो जनपदाः । 'तस्य निवास' इत्यण्प्रत्ययः । जनपदे लुप् । तेषामधिपस्य सम्बन्धिनीम् । शेषे षष्ठी । श्रि(यः) राजलक्ष्म्याः 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । पालयतेऽनयेति पालनी ताम् प्रतिष्ठापिकामित्यर्थः । प्रजारागमूलत्वात्सम्पद इति भावः । 'करणाधिकरणयोश्च' इति करणे ल्युट् । 'टिड्ढाणञ्—' इत्यादिना ङीप् । प्रजासु जनेषु विषये । 'प्र(जा) स्यात्सन्ततौ जने' इत्यमरः । वृत्तिं व्यवहारं ज्ञातुं यं वनेचरमयुङ्क्त नियुक्तवान् वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी । यदुक्तम्—'स्मरणं कीर्तनं केलिः प्रेक्ष(णं) गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' । एतदष्टविधमैथुनाभावः प्रशस्तिः 'वर्णाद् ब्रह्मचारिणि' इतीनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी ब्रह्मचारिवेषवानित्यर्थः । स नियुक्तः वने चरतीति वनेचरः किरातः । 'भेदा किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः । 'चरेष्ट' इति टप्रत्ययः । 'तत्पुरु(षे) कृति बहुलम्' इत्यलुक् । विदितं वेदनमस्यास्तीति विदितः । परवृत्तान्तज्ञान वानित्यर्थः । 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । उभयत्रापि 'पीता गावः' 'भुक्ता ब्राह्मणाः' 'विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम् । न तु कर्तरि क्तः । सकर्मकेभ्यस्तस्य विधानाभावात् । अत एव भाष्यकारः—अकारो मत्वर्थीयः । विभक्तमेषामस्तीति 'विभक्ताः' पीतमेषामस्तीति 'पीताः' इति सर्वत्र । अथवोत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः, पीतोदकाः पीता इति । अत्र लोपशब्दार्थमाह कैयटः-'गम्यार्थस्याप्रयोग एव लोपोऽभिमतः' । 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद् भ्रातृषूपचरितम् । 'पीतोदका गावः' इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते इति । तद्वदत्रापि वृत्तिगतं विदित्वं वेदितरि वनेचर उपचर्यते । एतेन 'वनाय पीतप्रतिबद्धवत्साम्', 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' एवमादयो व्याख्याताः अथवा विदितवान् । सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः । यथा 'आसितः कर्त्ता' इत्यादौ । यथाहुः—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' ॥ इति । द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद् द्वीतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादिवर्जित इत्यर्थः ।

युधि रणे स्थिरं युधिष्ठिरं धर्मराजम् 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक्। 'गवियुधिभ्यां स्थिरः' इति षत्वम् । समाययौ सम्प्राप्तवान् । अत्र 'वने वनेचरः' इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्त्यनुप्रासो नामालङ्कारः । अस्मिन्सर्गे वंशस्थवृत्तम् तल्लक्षणञ्च—'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ १ ॥

या नीलाम्बुदसन्निभा भगवती संसारतापान्वितान्
सद्यश्चञ्चलदृष्टिकोणकिरणैरालोक्य गर्जद्गिरा ।
कारुण्यामृतधारया विदधती मोहान्वितान् प्राणिनो
भक्तत्राणपरायणा विजयते जाग्रत्प्रभावा शिवा ॥

अन्वयः—कुरूणाम्, अधिपस्य, श्रियः, पालनीं प्रजासु, वृत्तिम्, वेदितुम्, यम्, अयुङ्क्त, सः, वर्णिलिङ्गी, विदितः, वनेचरः, द्वैतवने, युधिष्ठिरं, समाययौ ॥ १ ॥

सुधा—कुरूणाम्=कुरुसंज्ञकभूपनिवासप्रसिद्धदेशानाम् (यथोक्तं शब्दकल्पद्रुमे 'कुरुः धार्त्तराष्ट्रपाण्डवानां पूर्वपुरुषः' यथा—'योऽजमीढसुतस्त्वन्य ऋक्षः संवरणस्ततः । तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः । परीक्षित् सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥' अत्रसंज्ञकदेशानामिति न युक्तम्, यतः कुरुवर्षन्तु सिद्धपुरसमीपे वर्त्तते, तन्तु भारतवर्षान्तर्गतं न, प्रत्युत भारतदेशादुत्तरस्यां किन्नरहरिवर्ष-रम्यक-हिरण्मयवर्षेभ्योऽनन्तरं कुरुवर्षमस्तीति सिद्धान्तशिरोमणेर्गोलाध्याये भुवनकोशे भास्कराचार्यैरन्यैश्च भूगोलवर्णनशीलैरवर्णि )। अधिपस्य=स्वामिनः, दुर्योधनस्येति शेषः। श्रियः=राजसम्पदः, सम्बन्धिनीं, पालनीं=सकलनियमसेवनीं, प्रजासु=जनेषु तद्राष्ट्रान्तर्गतेष्विति शेषः। वृत्तिम्=व्यावहारम्, वा वार्त्ताम्, वेदितुम्=विज्ञातुम्, यम्=अज्ञातनामानम्, वनेचरमिति शेषः। अयुङ्क्त=नियुक्तवान्, सः=मान्यः, वर्णिलिङ्गी=ब्रह्मचारिस्वरूपधारी, 'नान्यो मां लोकप्रकृतिपरीक्षकं जानातु' अपि तु, साधुरूपमवलोक्य मत्तः किमप्यनाशङ्क्य स्वयथार्थं स्वभावं प्रकाशयतु, इतिधिया कपटब्रह्मचारिवेषधर इत्यर्थः। विदितः=ज्ञाताखिलज्ञातव्यः, वनेचरः=आरण्यकः, द्वैतवने=एतन्नाम्ना विदिते विपिने, युधिष्ठिरम्=ज्येष्ठपाण्डवमेतन्नामानम् प्रति, समाययौ=समागतः। अस्मिन् सर्गे वंशस्थसंज्ञं वृत्तम्। तल्लक्षणञ्च 'जतौ तु वंशस्थमुदीरितं जरौ ।' यथा—

| ज | त | ज | र |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| 'श्रियः कु— | रूणाम— | धिपस्य— | पालनीम् । |

समवृत्तत्वाच्चतेष्वपि पादेषु समानमेव लक्षणं ज्ञेयमिति ॥ १ ॥

समासो व्युत्पत्तिश्च—अधिपातीति अधिपः तस्याधिपस्य । पाल्यतेऽनयेति

पालनीं तां पालनीम् । वर्णः प्रशस्तिरस्यास्तीति वर्णी तस्य लिङ्गम् वर्णिलिङ्गम् तदस्यास्तीति वर्णिलिङ्गी। वने चरतीति वनेचरः युधि स्थिरो युधिष्ठिरः। द्वे इते गते यस्मात्तद् द्वीतं द्वीतमेव द्वैतं तच्च वने द्वैतवनम् तस्मिन् द्वैतवने ॥ १ ॥

व्याकरणम्—वेदितुम्=विद्+तुमुन्। अयुङ्क्त+युज्=लङ्। समाययौ=सम् + आङ्+या+लिट् ॥ १ ॥

वाच्यान्तरम्—दुर्योधनस्य प्रजापालनपद्धतिमवगन्तुं युधिष्ठिरेण योऽयुज्यत, तेन वर्णिलिङ्गिना वनेचरेण द्वैतवने युधिष्ठिरः समाययौ ॥ १ ॥

कोषः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। 'कुरुवर्ष-कुरुक्षेत्रवंशीयोऽपि नृपः कुरुः'। 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः। 'वृत्तिः प्रवृत्तिराख्याता वृत्तिर्वचनमुच्यते' 'वृत्तिर्वार्ता वृत्तमपि'। 'वनेचरो वनप्रिय इति स्मृतः' ॥ १ ॥

भावार्थः—यदा कौरवेश्वरेण दुर्योधनेन द्यूतक्रीडया सव्याजं पराजितो युधिष्ठिरो राज्यप्रभृति सर्वस्वं हारयित्वा भीमादिभिरनुजैर्द्रौपद्या स्त्रिया चानुगतो द्वादशः-वर्षात्मके वनवासे वसन्नास्ते, तदानीं तस्य मनसीत्थं विचार उत्पन्नः। स दुर्जनो दुर्योधनः कथमिव राज्यं करोति नयेनानयेन वेति ज्ञातव्यमित्यतस्तत्रस्थमेकं गूढचरोचिताचारचतुरं वनेचरं दुर्योधनस्य राज्यशासनपद्धतिज्ञानाय प्रेषितवान्। स च ब्रह्मचारिवेषं सर्वविश्वासयोग्यं धृत्वाऽर्थात् अयमस्मद्द्रोप्यविषयज्ञानाशया कोऽपि युधिष्ठिरस्य गूढचर' इति यथा कौरवाणां मनसि शंका न भवेत्तथा विधाय तत्र गत्वा सर्वमुदन्तमशेषेणावगम्य युधिष्ठिराय तदादेशकारी निवेदनार्थं द्वैतवने समागतः ॥ १ ॥

भावार्थः—जब महाराज युधिष्ठिर अपने चचेरे भाई दुर्योधन के कपट भरे जूआ के खेल से हारकर सपरिवार द्वैतवन में रहकर बारह वर्ष का वनवास व्यतीत कर रहे थे, उस समय अपने विरोधी दुर्योधन के 'शील' और 'कैसे प्रजाओं को पालना है' यह समझने के लिए जिस ब्रह्मचारी के वेषवाले वनेचर को भेजा था, वह वहाँ जाकर, पूरा हाल समझकर जहाँ कि द्वैतवन में युधिष्ठिर थे, वहाँ आ पहुँचा ॥ १ ॥

स प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—

कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।
न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २ ॥

कृतप्रणामस्येति। कृतप्रणामस्य तत्कालोचितत्वात्कृतनमस्कारस्य, सपत्नेन रिपुणा दुर्योधनेन 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय क्रियाग्रहणात्सम्प्रदानत्वम्। निवेदयिष्यतो

ज्ञापयिष्यतः । 'लृटः सद्वा' इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः । 'व्यथ भयचलनयोः' इति धातोर्लिट् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—न हीति । हि यस्मात् । हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति अन्यथा कार्यविघातकतया, स्वामिद्रोहिणः स्युरिति भावः। 'अमौढ्य-ममान्द्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः' इति नीतिवाक्यामृते ॥ २ ॥

अन्वयः—कृतप्रणामस्य, सपत्नेन जितां, महीं महीभुजे, निवेदयिष्यतः, तस्य, मनः, न, विव्यथे । हि, हितैषिणः, मृषा, प्रियं, प्रवक्तुं न, इच्छन्ति ॥ २ ॥

सुधा—कृतप्रणामस्य = विहितनमस्कारस्य, कृताभिवादनस्येत्यर्थः । सपत्नेन= शत्रुणा, दुर्योधनेनेत्यर्थः । जितां = व्याजद्यूतेनात्मसात्कृताम्, महीम् = पृथ्वीम्, महीभुजे = भूपतये, युधिष्ठिरायेत्यर्थः । निवेदयिष्यतः = निवेदयितुं विज्ञापयितु-मिच्छतः भवतो हस्तान्निजहस्ते राज्यं कृत्वा एवमेव स राज्यं प्रशास्तीति कथ-यिष्यत इत्यर्थः । तस्य = पूर्वप्रेषितस्य वनेचरस्य, मनः=मानसम्, हृदयमित्यर्थः । न विव्यथे=न व्यथितम्, अहो कथमेवं शत्रुप्रशंसां प्रभवे निवेदयामीत्येवं मनागपि मनो न विचलितं, न वा भयान्वितं जातम् । हि=यतः, यस्मात्कारणात् , हितैषिणः= प्रभुकल्याणेच्छवः, भृत्याः आज्ञाप्या इति यावत् । मृषा = मिथ्यात्मकम्, कपोल-कल्पितमिति भावः । प्रियं= श्रवणसुखदं वचनम्, प्रवक्तुम् = निवेदयितुम्, न = न प्रमादपि, इच्छन्ति=अभिलषन्ति, स्वप्नेऽपीति शेषः । मिथ्या तु मिथ्यैव, सत्यं सत्यमेव, तेन मिथ्याप्रियवचननिवेदनेन यथार्थविषयस्थितिमज्ञात्वा नरपतिः प्रमत्तो भवन् राज्यात्पतति, तात्कालिकमप्रियमपि वचनं निशम्य, तत्प्रतीकारतत्परो राजा न जात्वरिवशङ्गतो भवति, अतो गूणचरस्यायं मुख्यो धर्मोऽस्ति, यत्स्वा-मिनेऽसत्यं प्रियं न निवेदनीयमिति भावः । अत एवोक्तं 'सत्यं ब्रूयात्प्रियं ब्रूयात्' इति । अनेन यथार्थो भृत्यसमुदाचारो वर्णितः । एवम् 'अमौढ्यममान्द्यममृषा-भाषित्वमभ्यूहकत्वञ्चेति चारगुणाः' इति नीतिवाक्यामृते कथितम् ॥ २ ॥

समासः—कृतः प्रणामो येन सः कृतप्रणामस्तस्य कृतप्रणामस्य । महीं भुनक्तीति महीभुक् तस्मै महीभुजे । हितमिच्छन्तीति हितैषिणः ॥ २ ॥

व्याकरणम्—विव्यथे = व्यथ + लिट् । इच्छन्ति = इष् + लट् ॥ २ ॥

वाच्यान्तरम्—वनेचरस्य मनसा न विव्यथे, हितैषिभिर्मृषा प्रियं न प्रवक्तुमिष्यते ॥ २ ॥

कोषः—'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । 'पार्थिवो भूपतिर्भूपो महीभुक् क्ष्मापतिर्नृपः' । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः'

इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन' इत्यमरः । 'मृषा मिथ्या तु वितथे' इत्यमरः ॥ २ ॥

सारार्थः—स च वनेचरो युधिष्ठिरं प्रणम्य यथादृष्टं प्रभुद्रोहिप्रशंसापरमपि दुर्योधनकृतराज्यशासनविधिं प्रवक्तुमुद्यतः । परन्तु कथमेवं शत्रूत्कर्षं स्वप्रभवे निवेदयामिति मनागपि तस्य मनो न कम्पितम् । यतो हितेच्छोर्भृत्यस्य स्वामिनं प्रति सत्यकथनमेव परो धर्मः । कथमन्यथा भृत्यस्य विश्वासः । तथा शत्रुकृते प्रतीकारः क्रियते स्वामिभिरिति ॥ २ ॥

भाषाऽर्थः—किया है प्रणाम जिसने, और दुर्योधन से वशीकृत राज्य के बारे में कहने की इच्छा है जिसकी, ऐसे उस वनेचर का चित्त जरा भी विचलित नहीं हुआ । इसलिए कि मालिक के कल्याण चाहने वाले नौकर कभी झूठी मीठी बात मालिक से नहीं कह सकते ॥ २ ॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥

द्विषामिति । रहस्येकान्ते स वनेचरो द्विषां शत्रूणाम् । कर्मणि षष्ठी । विघाताय, विहन्तुमित्यर्थः । 'तमर्थाच्च भाववचनात्' इति चतुर्थी । 'भाववचनाच्च' इति तुमर्थे घञ्प्रत्ययः । अत्र तादर्थ्यमपि न दोषः तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेयं व्याचष्टे । विधातुं व्यापारं कर्तुमिच्छतः । समानकर्तृकेषु तुमुन् द्विषो विहन्तुमुद्युक्तज्ञानस्येत्यर्थः । अत एव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य । सुष्टु भावः सौष्ठवं शब्दसामर्थ्यम् । सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः । उदारस्य भाव औदार्यमर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्ये । अत्रौदार्यशब्दस्याजाद्यन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातस्यानित्यत्वज्ञापनान्न पूर्वनिपातः । उक्तं च काशिकायाम्—अयमेव लक्षणहेत्वोरिति निर्देशः । 'पूर्वनिपातव्यभिचारचिह्नम्'इति । ते एव विशेषः तयोर्वा विशेषः तेन शालते इति सौष्ठवौदार्यविशेषशालिनी ताम् । ताच्छील्ये णिनिः । विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् । उवाचेत्यर्थः ॥ ३ ॥

अन्वयः—सः द्विषां, विघाताय, विधातुम्, इच्छतः, भूभृतः, रहसि, अनुज्ञाम्, अधिगम्य, सौष्ठवौदार्यविशेषशालिनीं, विनिश्चितार्थाम्, इति, वाचम्, आददे ॥३॥

सुधा—सः=वनेचरः, विवक्षुरिति शेषः । द्विषाम्=शत्रूणाम्, विघाताय=नाशाय, विधातुम्=विधानं कर्तुम्, येनोपायेन शत्रुसंहरणम् भवेत्तं प्रकर्तुमित्यर्थः । इच्छतः=अभिलषतः, भूभृतः=भूपतेः, युधिष्ठिरस्येति शेषः । रहसि=एकान्ते;

निर्जने इति यावत् , अनुज्ञाम् = आज्ञाम्, अधिगम्य = प्राप्य, अर्थात् 'भो वनेचर ! तत्र गत्वा दुर्योधनस्य राजशासनपद्धतिं सम्यगवगतां ब्रूहि' इत्येवंरूपामाज्ञां शिरसि धृत्वा, सौष्ठवौदार्यविशेषशालिनीम् = शब्दार्थगुणशोभिताम्, विनिश्चितार्थाम् = विशेषरूपेण प्रकटार्थाम्, स्पष्टार्थामिति यावत् , इति = वक्ष्यमाणरूपाम्, वाचम् = वाणीम्, आददे = स्वीकृतवान् , उवाचेत्यर्थः ॥ ३ ॥

समासः—भुवं बिभर्तीति भूभृत् तस्य भूभृतः। सुष्ठु भावः सौष्ठवम्, उदारस्य भाव औदार्यम्, सौष्ठवं चौदार्यञ्च सौष्ठवौदार्ये, तयोः सौष्ठवौदार्ययोर्विशेषः सौष्ठवौदार्यविशेषः, तेन शालते शोभते या सा सौष्ठवौदार्यविशेषशालिनी, ताम् सौष्ठवौदार्यविशेषशालिनीम् । विशेषेण निश्चितः, निर्णीतोऽर्थो यस्यास्तां विनिश्चितार्थाम् ॥ ३ ॥

व्याकरणम्—विधातुं = वि + धा + तुमुन् । आददे = आ + दा + लिट् । इच्छतः = इष् + शतृ ॥ ३ ॥

वाच्यान्तरम्—भूभृतोऽनुज्ञामधिगम्य तेन सौष्ठवौदार्यविशेषशालिनी विनिश्चितार्था इति, वाक् आददे ॥ ३ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः। द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः इत्यमरः। 'भूभृद्भूमिधरे नृपे' इत्यमरः ॥ ३ ॥

सारार्थः—कथं दुर्योधनो राज्यं करोति, कथं च पराजितो भविष्यतीत्येतत्सर्ववृत्तान्तज्ञानायाज्ञापितो वनेचरस्तत्र गत्वा सर्वमवगम्य, तत आगत्य युधिष्ठिरं प्रति शब्दार्थचमत्कारलसितं वचनं समुवाच ॥ ३ ॥

भाषाऽर्थः—शत्रुओं का नाश करने के लिए उपाय करने की इच्छा रखनेवाले महाराज युधिष्ठिर की गुप्त रीति से आज्ञा पाकर वनेचर वहाँ सब कुछ समझकर शब्द और अर्थ के गुणों से पूर्ण वाक्य युधिष्ठिर से बोला ॥ ३ ॥

प्रथमं यावद्प्रियनिवेदकमात्मानं प्रत्यक्षोभं याचते—

क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

क्रियास्विति। हे नृपः! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैः। चारादिभिरित्यर्थः। चरन्तीति चराः। पचाद्यच्। त एव चाराः चरेः पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः। त एव चक्षुर्येषां ते चारचक्षुषः। 'स्वपरमण्डले कार्याकार्यविलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते। प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः। सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इति भावः अतोऽप्रतार्यत्वाद्धेतोः। अप्रियमप्रियं

साधु प्रियं वा मदुक्तमिति शेषः । क्षन्तुं सोढुमर्हसि । कुतः । हितं पथ्यं मनोहारि प्रियं च वचो दुर्लभम् । अतो मद्वचोऽपि क्षन्तव्यमित्यर्थः ॥ ५ ॥

अन्वयः—हे नृप !, क्रियासु, युक्तैः, अनुजीविभिः, चारचक्षुषः, प्रभवः, न, वञ्चनीयाः । अतः, असाधु, वा, साधु, क्षन्तुम्, अर्हसि । हितं, मनोहारि, च, वचः, दुर्लभम् ( भवति ) ॥ ४ ॥

सुधा—हे नृप ! नरेश !, युधिष्ठिर !, क्रियासु = कर्तव्यविषयेषु, युक्तैः=नियुक्तैः, संयोजितैरिति शेषः। अनुजीविभिः = अनुचरैः, भृत्यैरित्यर्थः॥ चारचक्षुषः = गूढचरदृशः, चारनयना इति शेषः । प्रभवः = स्वामिनः नः, वञ्चनीयाः = प्रतारणीयाः, न हि मिथ्यावाक्यैस्तत्कालश्रवणप्रियैर्वञ्चनीया इत्यर्थः । अतः = अस्मात्कारणात् ( यदि मन्निवेद्यमानं वचः ) असाधु = असम्यक् अप्रियमित्यर्थः । वा साधु=सम्यक्, प्रियं श्रवणहारीति यावत् ( भवेत् तत् त्वम् सेवकोक्तकोमलोक्तिश्रवणयोग्योऽपि, ममाप्रियमपि तथ्यं सत्यमुदन्तं निगद्यमानं, तत् ) क्षन्तुम् = सोढुम्, अर्हसि = योग्योऽसि । ( अहो सत्यमपि प्रियमेव प्रयोज्यम्, तदा त्वं कथमप्रियं सत्यं वक्तुमुद्यतोऽसीति चेत्तदाह ) हितं = परिणामकल्याणकरम्, ( तथा ) मनोहारि= सद्यः प्रियम्, वचः=वचनम्, दुर्लभम्=दुष्प्रयोज्यम्, अर्थादुक्तमिथोविरुद्धगुणद्वयवद्वचनप्रयोगे प्रवीणा अपि मनीषिणो विचारणपरायणा भवन्ति, अस्मादृशामाजन्मवनवृत्तीनां कथैव का, नियतमप्रियमेव मद्वचो भविष्यतीति पूर्वमपराधक्षमापनं सर्वथा समुचितमिति भृत्यस्योचितः परमः शिष्टाचार इति ॥ ४ ॥

समासः—चरन्तीति चराः, चरा एव चाराः, चारा एव चक्षूंषि येषां ते चारचक्षुषः । मनो हरतीति मनोहारि । दुःखेन लभ्यते यत्तत् दुर्लभम् ॥ ४ ॥

व्याकरणम्—वञ्चनीयाः = वञ्च + अनीयर् । क्षन्तुम् = क्षम + तुमुन् । अर्हसि = अर्ह् + लट् ॥ ० ॥

वाच्यान्तरम्—क्रियासु युक्ता अनुजीविनः चारचक्षुषः प्रभून् न वञ्चयेयुः । अतः असाधु वा साधु वचनम् त्वया अर्ह्यते । हितेन मनोहारिणा वचसा दुर्लभेन भूयते ॥

कोषः—'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः । चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः' इत्यमरः । 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः । 'सेवकार्थ्यनुजीविनः' इत्यमरः ॥ ४ ॥

सारार्थः—कार्यमात्रे नियुक्तैः सेवकैः सर्वथा प्रभवे सत्यमेव वचो निवेद्यम् । सत्यवचनप्रयोगशीलैरेव भृत्यैः स्वामिनो नयनवन्तो भवन्ति । असत्यभाषणैर्भृत्यैः प्रमादिनो नृपाः अन्धा एव । यथा अन्धः कूपे पतति, तथाऽयथार्थकथनशीलैश्चरैः सेवितो भूपः शत्रुप्रपञ्चकूपे पतति । अतो न कदापि मिथ्यावचनं निवेदनीयं सेवकैः । तथा चाप्रियमपि सत्यं भृत्यमुखोक्तं श्रोतव्यं स्वामिभिः । विनाऽनृतयोगेन सत्रं

सर्वथा प्रियं न भवति । केवलं यथार्थस्थितिवर्णनात्मकं स्वाभाविकं वाक्यजालं न हि सर्वथा प्रियं भवतीति । केवलप्रियवचनश्रवणादरो न विधेयो राज्यशास्तृकैः । यदि परुषं सत्यं श्रुत्वा भृत्योपरि स्वामी कुप्येत्तदा भयात्सङ्कोचाच्च भृत्यः कथं पुनः सत्यं कथयिष्यति । सत्याभावे कथं नरपतिः स्वापत्तिदूरीकरणार्थं यत्नं करिष्यति । तथा सति राज्यनाश एव फलम्, तस्मात् भृत्येन सत्यं निवेदनीयम्, स्वामिनाऽपि सादरं सत्यं परुषमपि श्रोतव्यमिति भावः ॥ ४ ॥

भाषाऽर्थः—किसी काम का भार शिर पर लेकर नौकर को चाहिए कि मालिक को न ठगे, इसलिए मैं आप को सच बताता हूँ । पर केवल सत्य बात मीठी नहीं होती, सो अगर मेरी बात कड़वी भी हो तो आप कृपा कर उसको क्षमा कर सकते हैं । क्योंकि जो बात भली और मीठी हो, ऐसी बात दुर्लभ है, उसमें भी मेरे जैसे भिल्ल-बनैले आदमी के लिए तो बिलकुल असम्भव ही है ॥ ४ ॥

तर्हि तूष्णींभाव एव वरमित्याशङ्क्याह—

स किंसखा साधु न शास्ति योऽधिपं हिताच्च यः संशृणुते स किंप्रभुः ।
सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५ ॥

स इति । यः सखामात्यादिरधिपं स्वामिनः साधु हितं न शास्ति नोपदिशति । 'ब्रुविशासि' इत्यादिना शासेर्दुहादिपाठाद् द्विकर्मकत्वम् । स हितानुपदेष्टा कुत्सितः सखा किंसखा । दुर्मन्त्रीत्यर्थः । 'किमः क्षेपे' इति समासान्तप्रतिषेधः । तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हितादाप्तजनाद्धितोपदेष्टुः सकाशात् । 'आख्यातो-पयोगे' इत्यपादानात्पञ्चमी । संश्रुणुते न शृणोति हितमिति शेषः । 'समो गम्यृच्छि' इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम्, अकर्मकत्वम् वैवक्षिकम् । स हितमश्रोता प्रभुः किंप्रभुः कुत्सितस्वामी पूर्ववत्समासः । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं स्वामिना । एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फल-माह—सदेति । हि यस्मान्नृपेषु अमा सह भवा अमात्यास्तेषु । 'अव्ययात्त्यप्' । अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते कुर्वन्ति । न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्रैवं राज-मन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धैरैकमत्यलक्षणकारस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तम्—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति ॥५॥

अन्वयः—यः, अधिपं, साधु, न; शास्ति, स, किं, सखा? वा किंसखा, यः हितात्, न, संशृणुते, स, किं, प्रभुः? वा किंप्रभुः हि, सदा अनुकूलेषु, नृपेषु, अमात्येषु, च, सर्वसम्पदः, रतिं, कुर्वते ॥ ५ ॥

सुधा—साधु = सम्यक् परिणामहितकरं वचनमित्यर्थः। न = नहि, शास्ति = उपदिशति, सः=असम्यगुपदेष्टाजनः, किं सखा ?=किं विचारकः ? नासौ सखेत्यर्थः। वा किंसखा=कुत्सितामात्यः, तदुपदेशेन प्रभुः पतत्येव राज्यादित्यर्थः। (तथा च) यः= कश्चित्, प्रभुः हितात्=हितोपदेशकात्, येनोपदेशेन न कदापि पराभवं प्राप्नुयात्तादृशोपदेशदातुरित्यर्थः। जनाद्वाऽमात्यादेरिति शेषः। न संशृणुते = नोपदेशं शृणोति, हितवाक्यस्य प्रायः कटुत्वादुपेक्षां करोति, सः=हितवचनश्रवणविमुखः किं प्रभुः ?= न प्रभुरित्यर्थः। वा किंप्रभुः कुत्सितप्रभुः, अविवेकवान् स इत्यर्थः। अत एव मया भवता चोक्तनीती पालनीये, अन्यथा शिष्टाचारविच्छेदापत्तिः संगच्छेत। अहो तादृशनियमपालने न केवलं शिष्टाचाररक्षणं फलमपि तु महाँल्लाभो विभवस्थैर्याभिलाषिणां भवतीत्याह—हि = यस्मात् कारणात्, सदा = सर्वदा, सततमित्यर्थः। अनुकूलेषु=अविरुद्धेषु, अन्योन्यानुरक्तेषु, नृपेषु = स्वामिषु, अमात्येषु=मन्त्रिषु, च= अपि मन्त्रिणोऽप्रियमपि वचनं श्रुत्वा भूपो भेषजमिव गृह्णीयात् न कदाचित्कुप्येत्। एवं स्वामिनोऽप्यप्रियमपि वाक्यं निशम्यामात्योपि न क्रोधं कुर्यादिति भावः। तथा सति, सर्वसम्पदः = सकलसम्पत्तयः, रतिं = अनुरागम्, सदा स्थित्यभिलाषमित्यर्थः। कुर्वते=कुर्वन्ति। मिथोऽनुरागरज्जुबद्धेषु नृपामात्येषु न कदाऽपि राज्यलक्ष्मीर्मुञ्चतीत्यर्थः॥ ५ ॥

समासः—सर्वाः सम्पदः सर्वसम्पदः ॥ ५ ॥

व्याकरणम्—शास्ति = शास् + लट्। संशृणुते=सम् + श्रु + लट्। कुर्वते = कृ + लट् ॥ ५ ॥

वाच्यान्तरम्—येन अधिपो न साधु शिष्यते, तेन किंसख्या भूयते, येन हिताच्च संश्रूयते, तेन किंप्रभुणा भूयते। हि सदाऽनुकूलेषु नृपेष्वमात्येषु सर्वसम्पद्भिः रतिः क्रियते ॥ ५ ॥

कोषः—'वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत' इत्यमरः। 'किं पृच्छायां जुगुप्सने' इत्यमरः। 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्' इत्यमरः। 'हि हेताववधारणे' इत्यमरः, 'अथ सम्पदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः ॥ ५ ॥

सारार्थः—य एवमात्यादेरुपदेशं श्रुत्वा स्वीकरोति स योग्यः स्वामी, य एवं प्रभुं हितवाक्यं वदति स एव योग्योऽमात्यादिः। अत एवान्योन्यानुरागवतोस्तयोर्भवने गुणबद्धेव राज्यलक्ष्मीर्नान्यतो गन्तुं पदमेकमप्युत्थापयति ॥ ५ ॥

भाषाऽर्थः—जो कोई अपने मालिक को हित की बातों का उपदेश नहीं देता, वह क्या मन्त्री है ? कभी नहीं, या वह खराब नौकर है। ऐसे ही जो मालिक अपने हितचिन्तक मन्त्री आदियों की बात नहीं सुनता, क्या वह मालिक है ? कभी नहीं, या वह नीच मालिक है। क्योंकि सदा आपस में मेल रखते हुए राजा और मन्त्रियों में हर एक तरह की सम्पत्तियाँ बनी रहती हैं ॥ ५ ॥

सम्प्रति स्वाहङ्कारं परिहरति—

निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥

निसर्गेति । निसर्गदुर्बोधं स्वभावदुर्ग्रहम् । 'ईषद्दुः-' इत्यादिना खल्प्रत्ययः । भूपतीनां चरितं क्व । अबोधविक्लवा अज्ञानोपहता जन्तवः । मादृशाः पामरजना इत्यर्थः । क्व नोभयं सङ्घटत इत्यर्थः । तथाऽपि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोगः । 'सन्धिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम् ॥' इत्यादिरूपो यन्मयाऽवेदि । ज्ञातमिति यावत् । विदेः कर्मणि लुङ् । अयम् । इदं वेदनमित्यर्थः । विधेयप्राधान्यात्पुँल्लिङ्गनिर्देशः । तवानुभावः सामर्थ्यम् । अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टाद्घञ्प्रत्ययः । श्रिणीभुवोऽनुपसर्गाद्भवतेर्घातोर्घञ्विधानात अत एव काशिकायाम्—'कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमासः' इति । दोषपरिहारौ सम्यग्ज्ञात्वैव विज्ञापयामि । न तु वृथा कणकठोरं प्रलपामीत्याशयः ॥ ६ ॥

अन्वयः—निसर्गदुर्बोधम्, भूपतीनाम्, चरितम् , क्व । अबोधविक्लवाः, जन्तवः, क्व । मया, विद्विषाम्, निगूढतत्त्वम्, नयवर्त्म, यत् अवेदि, ( तत् ) अयम् , तव, अनुभावः ॥ ६ ॥

सुधा—निसर्गदुर्बोधम्=प्रकृतिदुर्ज्ञेयम्, न केषामपि सुबोधमित्यर्थः । तादृशं, भूपतीनाम्=महीपतीनाम् राज्ञामित्यर्थः । चरितम्=कृत्यम्, राज्यशासनरूपमित्यर्थः । क्व=कुत्र, वर्त्तते । ( तथा च ) अबोधविक्लवाः=दुर्बोधजडाः, जन्तवः= शरीरिणः ( मादृशवनचरा इत्यर्थः ) क्व=कुत्र, वर्त्तन्ते, ( अनयोर्महदन्तरमस्ति । अर्थाद् राज्ञश्चरित्रं तु तीक्ष्णमतिभिरपि न हि ज्ञातुं शक्यते, तत्कथं मादृशैरबोधोपहतैर्ज्ञायते इति भावः । 'नृपस्य चित्तं कृपणस्य वित्तं देवो न जानाति कुतो मनुष्यः' इति । अथ तादृशत्वेऽपि तस्य ) मया=वनेचरेण, विद्विषाम्=भवच्छत्रूणाम्, दुर्योधनादीनां, निगूढतत्त्वं=अतिगुप्तसारम्, नयवर्त्म=राजनीतिपथः यत्= यत्किञ्चित्, अवेदि=ज्ञातम्, तत्=ज्ञानरूपम् ( तु ) अयम् तव=युधिष्ठिरस्य, अनुभावः=प्रभावः महिमेत्यर्थः । विज्ञस्य महतः संसर्गादज्ञो लघीयानपि महीयान् भवतीति भावः । 'काचः काञ्चनसंसर्गाद्धत्ते मारकती द्युतिम्' इतिवद्भवता सहवेशनोपवेशान्मयाऽपि किञ्चिज्ज्ञानमाप्तमिति ॥ ६ ॥

समासः—निसर्गाद् दुर्बोधम् निसर्गदुर्बोधम् । अबोधेन विक्लवा अबोधविक्लवाः । निश्चयेन गूढं तत्त्वं यस्य तद् निगूढतत्त्वम् । नयस्य वर्त्म नयवर्त्म अनुगतो भावः अनुभावः । प्रादिसमासः ॥ ६ ॥

व्याकरणम्—अवेदि=विद्+कर्मणि लुङ् ॥ ६ ॥

वाच्यान्तरम्—निसर्गदुर्बोधेन भूपतीनां चरितेन, क्व भूयते, अबोधविक्लवै जन्तुभिः क्व भूयते। अहं विद्विषां निगूढतत्त्वं नयवर्त्म येनावेदिषम्, तेन तवानु भावेनानेन भूयते ॥ ६ ॥

कोशः—'स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः' इत्यमरः 'विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः' इत्यमरः। 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इत्यमरः। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः ॥ ६ ॥

सारार्थः—राज्ञां चरितं सुबुद्धिनाऽपि सम्यग्ज्ञातुं न पार्यते, अतो मादृशेन मूढमतिना कथं वेत्तुं शक्यते। तथात्वेऽपि मया यत् स्तोकं बहु वा ज्ञातं, तत्केवलं भवतः संसर्गमहिम्नैवेति ॥ ६ ॥

भाषाऽर्थः—स्वभावतः नहीं समझने के लायक राजाओं के चरित कहाँ? फिर मेरे सरीखे मन्द समझने वाले आदमी कहाँ? इन दोनों में बहुत ही अन्तर है। ऐसा होने पर भी मैं आपके विपक्षियों के गूढतत्त्व की राजनीति को समझ सका हूँ, सो केवल आप ही का प्रभाव है ॥ ६ ॥

सम्प्रति यद्वक्तव्यं तदाह—

विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः।
दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

विशङ्कमान इति। सुखेन युध्यते सुयोधनः। 'भाषायां शासियुधिदृशिधृषिभ्यो युज्वाच्यः' नृपासनस्थः सिंहासनस्थोऽपि। वनमधिवसतीति तस्मात् वनाधिवासिनो वनस्थात्। राज्यभ्रष्टादपीत्यर्थः। भवतस्त्वत्तः पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाणः सन्। दुष्टमुदरमस्येति दुरोदरं द्यूतम्। पृषोदरादित्वात्साधुः। 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः। तस्य छद्मना मिषेण जितां लब्धां दुर्नयार्जितां जगतीं महीम्। 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती। नयेन नीत्या जेतुं वशीकर्तुं समीहते व्याप्रियते। न तूदास्त इत्यर्थः। बलवत्स्वामिकमविशुद्धागमञ्च धनं भुञ्जानस्य कुतो मनसः समाधिरिति भावः। अत्र 'दुरोदरच्छद्मजिताम्' इति विशेषणपदार्थस्य चतुर्थपदार्थं प्रति हेतुत्वेनोपन्यासाद् द्वितीयकाव्यलिङ्गमलङ्कारः। तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' ॥ ७ ॥

अन्वयः—नृपासनस्थः, अपि, वनाधिवासिनः, भवतः, पराभवं, विशङ्कमानः, दुर्योधनः, दुरोदरच्छद्मजितां, जगतीम्, नयेन, जेतुम्, समीहते ॥ ७ ॥

सुधा—नृपासनस्थः,=राजसिंहासनारूढः, 'सन्' अपि, वनाधिवासिनः=(साम्प्रतम्) विपिने विहरतोऽपि भवतः=त्वत्तः' पराभवं=पराजयम्' विशङ्कमानः=मन्यमानः न जाने कदाऽपि पाण्डवाः समागत्यास्माकं समूलघातं

कृत्वा राज्यं ग्रहीष्यन्ति एवं शङ्कया सदैव भयभीत इति भावः । सुयोधनः = अक्लेशयोद्धा; वैतन्नामकः धृतराष्ट्रज्येष्ठपुत्रः, दुरोदरच्छद्मजिताम् = द्युतकपटवशीकृताम्, व्याजाक्षक्रीडयाऽऽत्मसात्कृतामित्यर्थः । जगतीम् = महीम्, नयेन = न्यायेन राजधर्मेणेत्यर्थः । जेतुं = वशीकर्त्तुम्, समीहते = सञ्चेष्टते । येन प्रजाजनाः सर्वे तद्देशवर्त्तिनोऽनुरागिणश्च भवेयुस्तथा यतते इति भावः ॥ ७ ॥

समासः—नृपस्यासनं नृपासनम्, नृपासने तिष्ठतीति नृपासनस्थः । वनमधिवसतीति वनाधिवासी तस्माद् वनाधिवासिनः । दुरोदरस्य द्यूतस्य छद्म कपटं दुरोदरच्छद्म, तेन दुरोदरच्छद्मना जिता इति दुरोदरच्छद्मजिता, तां दुरोदरच्छद्मजिताम् । सुखेन युध्यते इति सुयोधनः ॥ ७ ॥

व्याकरणम्—समीहते = सम् + ईह + लट् । जेतुम् = जि + तुमुन् ॥ ७ ॥

वाच्यान्तरम्—नृपासनस्थेनापि वनाधिवासिनो भवतः पराभवं विशङ्कमानेन सुयोधनेन दुरोदरच्छद्मजिता जगती नयेन जेतुं समीहते ॥ ७ ॥

कोषः—'पराभवः परिभवः परिभूतः पराजयः' इति कोषः । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । 'दुरोदरे द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । 'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्' इत्यमरः । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । 'ओषः क्लीबे नयो न्याये' इत्यमरः ॥ ७ =

सारार्थः—राजसिंहासनारूढः सन् वनवासिनोऽपि भवतः सततं पराभवं मन्यमानो विक्रमेण भवन्तं जेतुमसम्भवं जानन् न्यायेन राष्ट्रं पालयन् स्वपक्षवर्त्ति कर्त्तुमीहते ॥ ७ ॥

भाषार्थः—राजसिंहासन पर बैठा हुआ दुर्योधन, वन में घूमते हुए भी आप लोगों से अनिष्ट की शङ्का करता हुआ कपट-पाश से जीती हुई पृथ्वी को राजनीति से अपने वश में करना चाहता है ॥ ७ ॥

'नयेन जेतुं जगतीं समीहते' इत्युक्तम् । तत्प्रकारमाह—

तथाऽपि जिह्मः स भवज्जिगीषया तनोति शुभ्रगुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥

तथाऽपीति । तथाऽपि साशङ्कोऽपि । जिह्मो वक्रः । वञ्चक इति यावत् । स दुर्योधनो भवज्जिगीषया । गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः । 'हेतौ' इति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणसम्पदा करणेन । शुभ्रं यशस्तनोति । स खलो गुणलोभनीयां स्वसम्पदमात्मसात्कर्तुं स्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महानस्त्यस्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गालाभे नीचसङ्गमाद्वरमुत्कर्षावहत्वादित्याह—समिति तथा हि भूतिं समुन्नयन्नुत्कर्षमापादयन् । 'लटः शतृशानचौ—' इत्यादिना शतृप्रत्ययः । पुनर्लङ-

ग्रहणसामर्थ्यात्प्रथमासामानाधिकरण्यम् । महात्मभिः समम् । सहेत्यर्थः । 'साकं सत्रा समं सह' इत्यमरः । अनार्यसङ्गमाद् दुर्जनसंसर्गात् । 'पञ्चमी विभक्ते' इति पञ्चमी । विरोधोऽपि वरं मनाक्प्रियः । 'दैवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । अत्र मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य 'भूतिं समुन्नयन्' इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्ताख्यात दोषापत्तिः । तदुक्तं काव्यप्रकाशे—'समाप्तपुनरादानात्समाप्तपुनरात्तकम्' इति । न च वाक्यान्तरमेतत्, येनोक्तदोषपरिहारः स्यात् । अर्थान्तरन्यासालङ्कारः । स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधित्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥

अन्वयः—तथाऽपि, जिह्मः, भवज्जिगीषया, गुणसम्पदा शुभ्रं, यशः, तनोति । भूतिम्, समुन्नयन्, अनार्यसङ्गमात्, महात्मभिः समम्, विरोधः, अपि, वरम् ॥८॥

सुधा—तथापि = तादृशचेष्टावानपि, साशङ्कोऽपीत्यर्थः । जिह्मः = वञ्चकः, कपटकुशलः । सः = दुर्योधनः भवज्जिगीषया = भवन्तं जेतुमिच्छया, केनापि विधिना धर्मराजो युधिष्ठिरो जेतव्यस्तत्र यतोऽसौ महान् धर्मतत्परः अतो न हि धर्माचरणमन्तरेण जेतुं शक्यः, 'यतो धर्मस्ततो जय' इत्युक्तत्वात् । अत एव भवतोऽप्यधिकं प्रजासु दानदाक्षिण्यादिभिः, गुणसम्पदा, शुभ्रम् = निर्मलम्, यशः = कीर्तिम्, तनोति = विस्तारयति । कुत एव तदाह—भूतिम् = विभूतिम् = ऐश्वर्यं वा, राजलक्ष्मीमित्यर्थः । समुन्नयन् = संवर्द्धयन् सन्, अनार्यसङ्गमात् = नीचजनसंसर्गात्, महात्मभिः = महानुभावैः, भवादृशैरित्यर्थः । समं = सह, विरोधः = विग्रहः, अपि, वरम् = ईषत्प्रियम् । यदि नीचसम्पर्केण तथा च महतो विरोधेनापि श्रियो वृद्धिस्तर्हि तदपि कर्तव्यमेवेति राजनीतिः ॥ ८ ॥

समासः—जेतुमिच्छा जिगीषा, भवतो जिगीषा भवज्जिगीषा, तया भवज्जिगीषया । गुणानां सम्पद् गुणसम्पत् तया गुणसम्पदा । न आर्यः अनार्यः, अनार्यस्य सङ्गमः अनार्यसङ्गमस्तस्मात् । महान् आत्मा यस्यासौ महात्मा, तैर्महात्मभिः ॥८॥

व्याकरणम्—तनोति = तनु + लट् । समुन्नयन् = सम् + उत् + नी + शतृ ॥८॥

वाच्यान्तरम्—तथापि जिह्मेन तेन भवज्जिगीषया गुणसम्पदा शुभ्रं यशः तन्यते । भूतिं समुन्नयता, अनार्यसङ्गमान्महात्मभिर्विरोधेनापि वरेण भूयते ॥ ८ ॥

कोषः—'जिह्मस्तु कुटिलेऽलसे' इत्यमरः । 'शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डुराः' इत्यमरः । 'यशः कीर्तिः समज्ञा च' इत्यमरः । विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमरः । 'नीचोऽनार्योऽकुलीनोऽपि शठो दुर्वृत्त' इत्यमरः । संसर्गः सङ्गमः सम्पर्क इति प्रोच्यते सम' इति । 'दैवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये' इत्यमरः । 'विरोधो विग्रहो मतः' इतिः कोषः ॥ ८ ॥

सारार्थः—यथा प्रजा भवतोऽपि तमुच्चदृष्ट्या पश्येत्तया प्रणिपातपूर्वकमधुना सर्वथा राज्यं दुर्योधनः पालयति। येन भवतः शासनविधिं स्मृत्वा भवद्वियोगेन विमनाः प्रजा न स्यात्, एवम्भूतोऽपि कृत्रिमसाधुः स भवतः सकाशाद्विरोधमेवेच्छति। न हि साम्प्रतमपि दुःशासनादिदुर्जनसंसर्गं त्यजति। यतोऽसौ प्रकृत्या खलः। साधुताऽपि तस्य स्वार्थसाधनिकैव। तथा हि—नीचसङ्गाद् महात्मभिर्भवादृशः सह विरोधमपि वरमेव मनुते ॥ ८ ॥

भाषाऽर्थः—तो भी ( हर समय चौकन्ना रहता हुआ भी ) कपटी वह दुर्योधन आपसे बढ़ने के ख्याल से देखो आ गुणों से अभी बेदाग ( निर्मल ) यश फैलाता है। क्योंकि ऐश्वर्य को बढ़ाते हुए आदमी के लिए नीचों के सङ्ग की अपेक्षा महान् जन से विरोध करना भी कुछ अच्छा ही है ॥ ८ ॥

ननु 'कातर्यं केवला नीतिः' इत्याशङ्क्य नीतियुक्तं पौरुषमस्त्येवेत्याह—

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

कृतेति। षण्णां वर्गः षड्वर्गः। अरीणामन्तःशत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः। शिवभागवतवत्समासः। तस्य जयः कृतो येन तेन तथोक्तेन। विनीतेनेत्यर्थः। विनीताधिकारं प्रजापालनमिति भावः। अलभ्यरूपां पुरुषमात्रदुष्प्राप्याम्। मनोरिमां मानवीम्। मनूपदिष्टसदाचारक्षुण्णामित्यर्थः। पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रपत्तुमिच्छुना। प्रपद्यतेः सन्नन्तादुप्रत्ययः 'सनिमीमा—' इत्यादिना सादेशः। 'अत्र लोपोऽभ्यासस्य'। इत्यभ्यासस्य। अस्ता तन्द्रिरालस्यं यस्य तेनास्ततन्द्रिणा। अनलसेनेत्यर्थः। तद्रिः सौत्रो धातुः। तस्मात् 'वङ्क्र्यादयश्च' इत्यौणादिकः क्रिन्प्रत्ययः 'कृदिकारादक्तिनो वा ङीष् वक्तव्यः' इति। 'वन्दीघटीतरीतन्द्री' इति ङीषन्तोऽपि इति क्षीरस्वामी। तथा रामायणे प्रयोगः—निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्' इति। तेन दुर्योधनेन। पुरुषस्य कर्म पौरुषं पुरुषकारः। उद्योग इति यावत्। युवादित्वादण्प्रत्ययः। 'पौरुषं पुरुषस्योक्ते भावे कर्मणि तेजसि' इति विश्वः। नक्तं च दिवा च नक्तन्दिवम्। अहोरात्रयोरित्यर्थः। 'अचतुर—' इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वनिपातेऽचसमासान्तः। विभज्यास्यां वेलायामिदं कर्मेति विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्यते ॥ ९ ॥

अन्वयः—कृतारिषड्वर्गजयेन, अगम्यरूपां, मानवीम्, पदवीम्, प्रपित्सुना, अस्ततन्द्रिणा, तेन, नक्तन्दिवं, विभज्य, नयेन, पौरुषम्, वितन्यते ॥ ९ ॥

सुधा—कृतारिषड्वर्गजयेन = वशीकृतकामक्रोधादिषड्वैरिणा, अगम्यरूपाम् = दुर्विज्ञेयाम्, दुर्बोधैः साधारणजनैर्वेति शेषः। मानवीम्—मनुसम्बन्धिनीम् = मनुप्रोक्ताम्, कथं राज्ञा प्रजा पालनीयेति मनुस्मृत्युदितामिति भावः। पदवीम् =

प्रजापालनपद्धतिम्, प्रविस्तुना = प्राप्तुमिच्छुना, 'दुर्योधनस्तु यथार्थमनूपविष्टप्रजापालनपद्धत्या प्रजाः पालयति, अयमपि धर्मात्मा राजा। नायं युधिष्ठिरादिभ्यः स्वबन्धुभ्यः पाण्डवेभ्यो यद्विरोधं विदधाति, तदिह संसारे केन न क्रियते स्वोन्नत्यै। अतो नायं कुनृपतिः। अयमेव चेदस्माकं सर्वदा पालकः स्यात्तथाऽपि न कोऽपि क्षतिलेशः' इति यथा प्रजासु ख्यातिं प्राप्नोति, तथा तेनाचर्यते इत्यर्थः। अस्ततन्द्रिणा = निरलसेन, सदा दक्षेणेत्यर्थः। तेन = दुर्योधनेन, नक्तन्दिवम् = अहोरात्रम्, विभज्य = विभागं कृत्वा, 'अस्मिन् समये इदं कर्म कर्त्तव्यमिदं न कर्त्तव्यम्' एवं समयविभागं विधायेत्यर्थः। पौरुषम् = पौरुषाचरणं नयेन = न्यायेन, न तु स्वार्थसिद्धिया अपि तु नीतिशास्त्रानुसारेणेत्यर्थः। वितन्यते = विस्तार्यते ॥ ९ ॥

समासः—षण्णां वर्गः षड्वर्गः। अरीणां षड्वर्गोऽरिषड्वर्गः। कृतः अरिषड्वर्गस्य जयो येन सः तेन कृतारिषड्वर्गजयेन। न गम्यं रूपं यस्याः साऽगम्यरूपा, ताम् अगम्यरूपाम्। मनोरियं मानवी ताम् मानवीम्। अस्ता तन्द्रिर्यस्य येन वा सः अस्ततन्द्रिः। तेनास्ततन्द्रिणा। पुरुषस्येदं पौरुषम् ॥ ९ ॥

व्याकरणम्—विभज्य = वि + भज् + क्त्वा + ल्यप्। वितन्यते = वि + तनु + य + त + कर्मणि लट् ॥ ९ ॥

वाच्यान्तरम्—कृतारिषड्वर्गजयः अगम्यरूपां मानवीं पदवीं प्रपित्सुः अस्ततन्द्रिः सः ( दुर्योधनः ) नक्तन्दिवं विभज्य नयेन पौरुषं वितनोति ॥ ० ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'वृन्दभेदाः समैर्वर्गः सङ्घसार्थौ तु जन्तुभिः' इत्यमरः। 'विजयो जयः' इत्यमरः। 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः। सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति च' इत्यमरः। 'नयो न्याये' इत्यमरः। 'पुम्भावे तत्क्रियायां च पौरुषम्' इत्यमरः। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि'। 'तन्द्री प्रमीला' इत्यमरः ॥ ९ ॥

भावार्थः—कामक्रोधादिषड्रिपून् विवेकेन जित्वा, मनूपदिष्टप्रजापालनविधिप्रचारलब्धयशो लब्धुमिच्छुः, अस्मिन् समये यदस्मिंश्च समये इदं कर्मावश्यं कर्त्तव्यमेवं वेलाविभागं विधायालस्यरहितः सन् स्वकर्तव्यं प्रजासु प्रदर्शयति स्वव्याजाभावसौष्ठवं गोपायतीति ॥ ९ ॥

भावार्थः—किया है काम, क्रोध, मोह, लोभ आदि शत्रुओं का जय जिसने, ऐसे और अत्यन्त कठिन, मनुस्मृति के अनुसार मार्ग ( प्रजापालन-क्रम ) को पाने की इच्छा करने वाले और दूर है आलस्य जिससे, ऐसे दुर्योधन ने दिन-रात्रि का ठीक विभाग ( अभी यह काम करना चाहिये, उस वक्त यह करूँगा, ऐसे समय बाँट ) कर न्याय ( नीति ) से अपने कर्त्तव्य को पूरा करता है ॥ ९ ॥

सम्प्रति भृत्यानुरागमाह—

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः ।
न सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥

सखीनिवेति । गतस्मयो निरहङ्कारोऽत एव स दुर्योधनः सन्ततमनारतं साधु सम्यक् । अकपटमित्यर्थः । अनुजीविनो भृत्यान् । प्रीतियुजः स्निग्धान्सखीनिव मित्राणीव । दर्शयते । लोकस्येति शेषः । 'हेतुमति च' इति णिच् । 'णिचश्च' इत्यात्मनेपदम् । शोभनं हृदयं येषां तान्सुहृदो मित्राणि च । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । बन्धुभिर्भ्रात्रादिभिः समानमानांस्तुल्यसत्कारान् दर्शयते । बन्धूनां समूहो बन्धुता ताम् । 'ग्रामजनबन्धुसहायेभ्यस्तल्' कृतमाधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते । बन्धूनधिपतीनिव दर्शयतीत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्सम्भावयतीत्यर्थः । अनुजीव्यादीनाम् 'कर्तुरीप्सिततमं कर्म' इति कर्मत्वम् । पूर्वे त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—स राजाऽनुजीव्यादीनिव दर्शयते । सख्यादय इव ते तु तं पश्यन्ति । साख्यादिभावेन पश्यतस्तांस्तथा दर्शयते । स्वयमेव छन्दानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः । अर्थात्तस्येप्सितकर्मत्वम् । अणि कर्तुरनुजीव्यादेः 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति पाक्षिकं कर्मत्वम् । एवं चात्राण्यन्तकर्मणो राज्ञो ण्यन्ते कर्तृत्वेऽपि 'आरोहयते हस्ती स्वयमेव' इत्यादिवदश्रूयमाणकर्मान्तरत्वाभावाच्चायं णेरणादिसूत्रस्य विषय इति मत्वा 'णिचश्च' इत्यात्मनेपदं प्रतिपेदिरे । भाष्ये तु णेरणादिसूत्रविषयत्वमप्यस्योक्तम् । यथाऽऽह—'पश्यन्ति भृत्या राजानम्', 'दर्शयते भृत्यान् राजा', 'दर्शयते भृत्यै राजा', अत्रात्मनेपदं सिद्धं भवति' इति । अत्राह कैयटः—ननु कर्मान्तरसद्भावादात्मनेपदेन भाव्यम् । उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय उन्नीयते । अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति । यथा—'स्थलमारोहयति मनुष्यान्' इति । इह त्वण्यन्तावस्थायां कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति ॥ १० ॥

अन्वयः—गतस्मयः, सः, सन्ततम् , अनुजीविनः, प्रीतियुजः, सखीन् , इव सुहृदः च, बन्धुभिः, समानमानान् , बन्धुतां, कृताधिपत्याम्, इव, साधु, दर्शयते ॥ १० ॥

सुधा—गतस्मयः=अपगतगौरवः, नम्रः सन् इत्यर्थः । सः=पूर्वोक्तो दुर्योधनः । सन्ततम्=सततम्, सर्वदेत्यर्थः । अनुजीविनः=अनुचरान् , किङ्करानित्यर्थः । प्रीतियुजः=स्नेहसमन्वितान् , प्रेमपूरितानित्यर्थः । सखीन्=मित्राणि, इव, ( साधु=सम्यक् , दर्शयते इति सर्वत्र कर्मान्ते योजनीयम् ) । अहो यदि मित्रवद् भृत्यगणं सः पश्यति, तदा मित्रगणं कया दृष्ट्या विलोकयतीत्याह—सुहृदः=

मित्राणि, च = तु, बन्धुभिः = भ्रातृप्रभृतिनिजपरिवारैः, समानमानान् = स
रान्, यथा स्वसहजेषु भावस्तथैव कर्णप्रभृतिमित्रेष्विति भावः। अथा
यदि मित्रमवलोकयति तदा बन्धुगणं किमिव पश्यति स इत्याह—बन्धु
बान्धववृन्दम्, बन्धूनां समूहो बन्धुता, तां, बन्धुताम्, कृताधिपत्याम् =
सर्वाधिकाराम् इव, साधु = निर्व्याजम् , दर्शयते = बोधयते ॥ १० ॥

समासः—गतः स्मयो यस्य स गतस्मयः। प्रीत्या युञ्जन्ति ये ते प्री
तान् प्रीतियुजः। अनु पश्चात् ( धावनेन ) जीवनं येषां तेऽनुजीविनः, त
जीविनः। समानः मानो येषां ते समानमानाः, तान् समानमानान्।
समूहो बन्धुता, तां बन्धुताम्। अधिपतेः कर्म आधिपत्यम्, कृतमाधिपत्
तां कृताधिपत्याम् ॥ १० ॥

व्याकरणम्—दर्शयते = दृश् + णिच् + लट् ॥ १० ॥

वाच्यान्तरम्—गतस्मयेन तेन, अनुजीविनः ( प्र० ) प्रीतियुजः (प्र०)
इव दृश्यन्ते। सुहृदः ( प्र० ) बन्धुभिः समानमाना इव दृश्यन्ते। बन्धुत
धिपत्या इव दृश्यते ॥ १० ॥

कोषः—'वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्' इत्यमरः। 'सेव
नुजीविनः' इत्यमरः। 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्य
'सततानारताश्रान्तसन्तताविरतानिशम्' इत्यमरः। 'दर्पोऽवलेपोऽवष्टम्भश्चि
स्मयो मदः' इत्यमरः। 'ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः' इत्यमरः ॥

सारार्थः—स च दुर्योधनोऽभिमान दूरतो विहाय प्रेमपूरितानि मि
भृत्यान् लोकाय दर्शयते। मित्राणि तु बन्धूनिव दर्शयते। बन्धूस्तु अधिप
दर्शयते। यथोचितविशेषसत्कारं कुरुते सर्वेषामिति ॥ १० ॥

भाषाऽर्थः—अहङ्कार से रहित होकर वह (दुर्योधन) अनुरक्त मित्रों के
नौकरों के साथ व्यवहार दिखाता है। मित्रों से भाई के समान व्यवहार और
बिरादर से अध्यक्ष के सरीखे भाव रखता है ॥ १० ॥

न चायं त्रिवर्गेऽप्रमाद्यतीत्याह—

असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया।
गुणानुरागादिव सख्यमीयिवान् न बाधतेऽस्य त्रिगणः परस्परम् ॥ ११

असक्तमिति। यथायथं यथास्वं विभज्य। असङ्कीर्णरूपं विविच्येत्यर्थः। 'य
यथायथम्' इति निपातनाद् द्विर्भावो नपुंसकत्वं च। 'ह्रस्वो नपुंसके प्रा
कस्य' इति ह्रस्वत्वम्। पक्षे पातः पक्षपात आसक्तिविशेषः समस्तुल्यो यस्यां
समपक्षपातया। भक्त्यानुरागविशेषेण। पूज्येष्वनुरागो भक्तिरित्युपदे
पूज्यश्चायं त्रिवर्ग इति। असक्तमनासक्तम्। अव्यसनितयेति यावत्। आरा

सेवमानस्यास्य दुर्योधनस्य त्रयाणां धर्मार्थकामानां गणस्त्रिगणवर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । गुणानुरागात्तदीयगुणेष्वनुरागात् । गुणवदाश्रयलोभादित्यर्थः । सख्यं मैत्रीम् । 'सख्युर्यः' इति यप्रत्ययः । उपेयिवानुपगतवानिवेत्युत्प्रेक्षा । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः । 'नात्रोपसर्गस्तन्त्रम्' इति काशिकाकार आह स्म । परस्परं न बाधते । समवर्तित्वादस्य 'धर्मार्थकामाः परस्परानुपमर्देन वर्धन्त' इत्यर्थः । उक्तं च—'धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः' इति ॥ ११ ॥

अन्वयः—यथायथं विभज्य, समपक्षपातया, भक्त्या, असक्तम्, आराधयतः, अस्य, गुणानुरागात्, सख्यम्, ईयिवान् इव, त्रिगणः, परस्परं, न बाधते ॥ ११ ॥

सुधा—यथायथम् = यथास्वम्, यथोचितमित्यर्थः । विभज्य = विभागं विधाय, समपक्षपातया = तुल्यव्यवहारेण, अविषमभावेनेत्यर्थः । भक्त्या = अनुरागविशेषेण, असक्तम् = अनासक्तम्, यथा स्यात्तथा, न हि तदधीनो भूत्वेत्यर्थः । आराधयतः = सेवमानस्य, भजत इत्यर्थः । अस्य = दुर्योधनस्य, गुणानुरागात् = दयादाक्षिण्यौदार्यशौर्यगाम्भीर्यप्रभृतिसल्लक्षणस्नेहाद् इव, त्रिगणः = धर्मार्थकामेत्येवंरूपः, न बाधते=न बाधां करोतीति । यस्मिन् समये तेन धर्मः सेव्यते न हि तदानीमर्थकामौ तं बाधेते । यदार्थसञ्चयः क्रियते न हि तदानीं धर्मकामौ पीडयतः एवं यदा कामः सेव्यते न हि तदानीमर्थधर्मौ बाधेते । स च सदा समयविभागं कृत्वाऽस्मिन् समयेऽर्थसञ्चय एवास्मिन् समये धर्मसञ्चय एवास्मिन् समये कामपूरणमुचितमेव करोतीति ॥ ११ ॥

समासः—समः पक्षपातो यस्यां सा समपक्षपाता । तया समपक्षपातया । गुणेषु गुणानां वाऽनुरागो गुणानुरागस्तस्माद् गुणानुरागात् । त्रयाणां गणः त्रिगणः ॥११॥

व्याकरणम्—विभज्य = वि + भज् + क्त्वा + ल्यप् । बाधते = बाध + लट् । आराधयतः = आ + राध् + णिच् + शतृ । भक्त्या = भज् + क्तिन् ॥ ११ ॥

वाच्यान्तरम्—यथायथं विभज्य समपक्षपातया भक्त्या असक्तमाराधयतोऽस्य गुणानुरागात् सख्यमीयुषा इव त्रिगणेन परस्परं न बाध्यते ॥ ११ ॥

कोषः—'अनासक्तमसक्तं च पृथग्वर्ति पृथग् स्थितम्' इति । 'यथार्थं तु यथायथम्' इत्यमरः । 'मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः' इत्यमरः । 'मिथोऽन्योन्यं परस्परम्' इति कोषः ॥ ११ ॥

सारार्थः—उचितरूपेण समदृष्ट्या धर्मार्थकामान् सेवमानस्य दुर्योधनस्य गुणप्रेम्णा मैत्रीं लब्धवानिव धर्मार्थकामानां गणः परस्परं न बाधते । अर्थाद् धर्माचरणसमये न हि अर्थकामौ तन्मनो भ्रामयतः । एवमर्थसञ्चयसमये न हि धर्मकामौ तच्चित्तं चपलं कुरुतः । येन सर्वथाऽर्थार्जनं भवेत् । एवं कामोदयसमये

नहि जर्माथौं तद्‌द्वयं बाधेते, येन कामपूरणे न काऽपि बाधा सम्भवेत्। साधारणजनस्य धर्मचिन्तनावसरे तद्विरोधिनाविवार्थकामौ पीडयतः। तथाऽर्थार्जनावसरे धर्मकामौ स्वस्वावश्यकतां प्रदर्शयन्तौ बाधां कुरुतः। तथा दुर्योधनं न, किन्तु ते धर्मार्थकामास्तद्विशेषगुणप्रीत्या मित्रतामुपगतास्तेन सहेति भावः ॥ ११ ॥

भावार्थः—समुचित ( यथार्थ ) रूप से समय बाँट कर, बराबर प्रेम से उसके वशीभूत न होकर, सेवा करते हुए दुर्योधन के गुणों के प्रेम से मित्रता के प्राप्त हुए के समान उस दुर्योधन को धर्म, अर्थ, काम, एक दूसरे के साथ नहीं बाधा करते हैं ॥ ११ ॥

अथश्लोकत्रयेणोपायकौशलं दर्शयन्नादौ सामदाने दर्शयति—

निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया ॥ १२ ॥

निरत्ययमिति । तस्य दुर्योधनस्य निरत्ययं निर्बाधम् । अमायिकमित्यर्थः । अन्यथा जनानां दुर्ग्रहत्वादिति भावः । साम सान्त्वम् । 'सम सान्त्वमुभे समे' इत्यमरः । दानवर्जितं न प्रवर्तते । अन्यथा लुब्धाद्यावर्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः । उक्तं च—'लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्मणा । मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम् ॥' इति । यथा भूरि प्रभूतम् । न तु कदाचित्स्वल्पमित्यर्थः । दानं धनत्यागः । सदित्यादरार्थेऽव्ययम् । 'आदरानादरयोः सदसती' इति निपातसंज्ञास्मरणात् । तस्य क्रियां सत्क्रियां विरहय्य विहाय । 'ल्यपि लघुपूर्वात्' इत्ययादेशो न प्रवर्तते । अनादरे दानवैफल्यादिति भावः । न चैवं सर्वत्र येनाविवेकित्वं कोशहानिश्च स्यादित्याह—प्रेति । विशेषशालिन्यतिशययोगिनी सत्क्रियाऽऽदरक्रिया गुणानुरागेण विना न प्रवर्त्तते । 'पृथग्विना—' इत्यादिना तृतीया । गुणेष्वादरो भूरिदानं चेति नोक्तदोषावकाश इत्यर्थः । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनादेकावल्यलङ्कारः । तदुक्तं काव्यप्रकाशे—'स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् । विशेषणतया वस्तु यत्र सैकावली द्विधा' इति ॥ १२ ॥

अन्वयः—तस्य, निरत्ययं दानवर्जितं साम, न ( प्रवर्त्तते ) । सत्क्रियां, विरहय्य, भूरि, दानं, न ( प्रवर्त्तते ) विशेषशालिनी, सत्क्रिया, गुणानुरोधेन, विना न प्रवर्त्तते ॥ १२ ॥

सुधा—तस्य = दुर्योधनस्य, निरत्ययं = निरापदं, निर्विघ्नमित्यर्थः । साम = सान्त्वं, प्रियवचनमित्यर्थः । दानवर्जितं = धनप्रयोगरहितम् । न प्रवर्त्तते । अर्थात् यस्योपरि प्रसन्नो भूत्वा प्रियवाक्यं ब्रूते, तस्मै नियतं धनमपि ददात्येवेति भावः । सत्क्रियां = सत्कार, सम्मानमित्यर्थः । विरहय्य = विहाय, भूरि = बहुलम् , दानम् = धनप्रयोगः, न प्रवर्त्तते । अर्थात् ससम्मानमेव धनं ददाति नापमानं

कृत्वा कस्मैचित्किमपि ददाति । विशेषशालिनी = प्रशंसनीयः, सत्क्रिया = सत्कारः, गुणानुरोधेन = गुणपक्षपातेन, विना = ऋते, न प्रवर्त्तते । अर्थाद् गुणिनं जनमेव दुर्योधनो मानयति । यं च मानयति, तस्मै धनमपि ददादि । तदपि प्रियकथाकथनपूर्वकमेवेति भावः ॥ १२ ॥

समासः—निर्गतः अत्ययो यस्मात्तद् निरत्ययम् । दानेन वर्जितं दानवर्जितम् । सती चासौ क्रिया सत्क्रिया, तां सत्क्रियाम् । विशेषेण शालते या सा विशेषशालिनी । गुणानामनुरोधस्तेन गुणानुरोधेन ॥ १२ ॥

व्याकरणम्—विशेषशालिनी = विशेष + शाल + णिनिः । प्रवर्त्तते + प्र + वृतु + लट् ।

वाच्यान्तरम्—निरत्ययेन साम्ना दानवर्जितेन न ( प्रवृत्यते ) । सत्क्रियां विरहय्य भूरिणा दानेन न ( प्रवृत्यते ) । विशेषशालिन्या सत्क्रियया गुणानुरोधेन विना न प्रवृत्यते ॥ १२ )

कोषः—'अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्ययथापदि' इत्यमरः । 'अत्यर्थमधुरं सान्त्वं सङ्गतं हृदयङ्गमम्' इत्यमरः । 'त्यागो विहापितं दानमुत्सर्जनविसर्जने' इत्यमरः । 'पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इत्यमरः ॥ १२ ॥

सारार्थः—स यस्य कस्योपरि प्रसन्नो भूत्वा सस्नेहमालापं करोति, तस्मै नियतं तत्सन्तोषार्थमपि ददात्येव । न हि वाङ्माधुर्यमात्रं फलम् । तथा च भूरि दानन्तु सत्कारार्हस्यैव सत्कारं विधाय ददाति, न हि यस्मै कस्मैचिदपात्राय बहु ददाति । तथा कृतेऽपव्ययित्वापत्तिस्तस्मिन् स्यात् । सत्कारोऽपि यस्य कस्याप्यपरिचितस्य न हि करोति, य एव सत्कारयोग्यो गुणवान् जनस्तस्यैव करोतीति । अनेन स दुर्योधनो महान् समीक्ष्यकारीति सूच्यते ॥ १२ ॥

भावाऽर्थः—वह बिना कुछ दिये, सिर्फ कोमल बात नहीं किसी से कहता । जिसको बहुत देता है, उसको सत्कार करके ही देता है । बिना गुण की परीक्षा किये किसी का विशेष सत्कार नहीं करता, बल्कि योग्यतानुसार सत्कार करता है ॥ १२ ॥

अथ दण्डप्रकरमाह—

वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् ॥ १३ ॥

वसूनीति । वशी दुर्योधनो वसूनि धनानि वाञ्छन् । लोभादित्यर्थः । 'वसु तोये धने मणौ' इति वैजयन्ती । निहन्तीति शेषः । तथा मन्युना कोपेन न च । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति स्मरणादित्यर्थः किन्तु निवृत्तकारणो निवृत्तलोभादिनिमित्तः सन्स्वधर्म इत्येव । स्वस्य राज्ञः सतो ममायं धर्मो ममेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः । 'अदण्ड्यान्दण्डयन्

राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति स्मरणादिति भावः । गुरूपदिष्टेन प्राड्विवाकोपदिष्टेन । 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद् व्यवहाराननुक्रमात् ॥' इति नारदस्मरणात् । दण्डेन दमेन । शिक्षयेत्यर्थः । रिपौ सुतेऽपि वा । स्थितमिति शेषः । एतेनास्य समदर्शित्वमुक्तम् । धर्मविप्लवं धर्मव्यतिक्रमम् । अधर्ममिति यावत् । निहन्ति निवारयति । दुष्ट एवास्य शत्रुः शिष्ट एव बन्धुः । न तु सम्बन्धनिबन्धनः पक्षपातोऽस्तीत्यर्थः ॥ १३ ॥

अन्वयः—वशी, सः ( दुर्योधनः), वसूनि वाञ्छन् न, मन्युना न, निवृत्तकारणः ( सन् ) स्वधर्मः एव ( एषः ) इति गुरूपदिष्टेन दण्डेन रिपौ वा सुते अपि धर्मविप्लवं निहन्ति ॥ १३ ॥

सुधा—वशी = सर्वतन्त्रस्वतन्त्रः न तु परतन्त्रः, येन केनापि विधिना जनान् स्वाधीनान् करोतीति वा, वसूनि = धनानि, वाञ्छन्, = इच्छन्, न = हि ( जनं न पीडयतीति शेषः ) तथा च, मन्युना = क्रोधेन, न ( निहन्ति ) किन्तु, निवृत्तकारणः = कारणरहितः, लोभाद्यर्थसञ्चयहेतुहीन इत्यर्थः । केवलं दण्डनीयः = दण्ड्य इति, स्वधर्मः = राजधर्म एवास्माकम्, इत्यतः गुरूपदिष्टेन = मन्वादिशास्त्रोपदेशानुसारेण, दण्डेन = दमेन, रिपौ = शत्रौ, वा सुते = आत्मजे, पुत्रेऽपीत्यर्थः । धर्मविप्लवम् = धर्मविरुद्धम्, धर्मनीतिमर्यादोल्लङ्घनमित्यर्थः । निहन्ति = दण्डयति, अन्याचारान्निवारयति इत्यर्थः ॥ १३ ॥

समासः—स्वस्य धर्मः स्वधर्मः, निवृत्तानि कारणानि यस्मात् स निवृत्तकारणः । गुरुणा उपदिष्टस्तेन गुरूपदिष्टेन । धर्मस्य विप्लवः धर्मविप्लवस्तम् ॥ १३ ॥

व्याकरणम्—वाञ्छन् = वाछि + शतृ । निहन्ति = नि + हन् + लट् + ति । वशी = वश + इन् ॥ १३ ॥

वाच्यान्तरम्—वशिना तेन, वसूनि वाञ्छता न, मन्युना न, स्वधर्म एवेति निवृत्तकारणेन ( दुर्योधनेन ) गुरूपदिष्टेन दण्डेन रिपौ सुतेऽपि वा धर्मविप्लवो निहन्यते ॥ १३ ॥

कोषः—'वसु तोये धने मणौ' इति वैजयन्ती । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । 'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्' इत्यमरः । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' इत्यमरः । 'साहसं तु दमो दण्डः' इत्यमरः ॥ १३ ॥

सारार्थः—जितेन्द्रियो दुर्योधनो यत्प्रजां दण्डयति, तद्धनसञ्चयाशया न, न हि क्रोधेन वा, किन्तु ममायं धर्म एवेति धिया क्रोधलोभमोहादिदण्डकरणकारणरहितः सन् यदि पुत्रोऽप्यपराधी, तदा तमपि दण्डयति; न हि शत्रुमित्रयोरुपरि दण्डदानसमये भेददृष्ट्या विलोकयतीति ॥ १३ ॥

भाषाऽर्थः—अपने अधीन सबको रखने वाला वह दुर्योधन, न तो कुछ धन बटोरने की चाह से, न तो क्रोध ही से, किसी को कुछ दण्ड देता है। बल्कि दुष्ट अपराधियों का शासन करना मेरा धर्म है, इस ख्याल से धन जमा करने के कारणों से विमुख होकर, गुरु के उपदेश के अनुसार चाहे दुश्मन, चाहे लड़का ही क्यों न हो, समदृष्टि से जिसको अन्यायी समझता है, उसी को दण्ड देता है ॥१३॥

सम्प्रति भेदकौशलं दर्शयति—

विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः।
क्रियाऽपवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः॥ १४ ॥

विधायेति । शङ्का सञ्जाताऽस्य शङ्कितोऽविश्वस्तः सन्परितः सर्वत्र स्वपरमण्डले परेतरानात्मीयान्। अवञ्चकानिति यावत्। यद्वा परानितरयन्ति भेदेनात्मसात्कुर्वन्तीति परेतरान्। 'तत्करोति'ति ण्यन्तात्कर्मण्यण्प्रत्ययः। रक्षन्तीति रक्षान् रक्षकान्। मन्त्रगुप्तिसमर्थानित्यर्थः 'नन्दिग्रही—' त्यादिना पचाद्यच्। विधाय कृत्वा। नियुज्येत्यर्थः। अशङ्किताकारमुपैति। स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन्परमुखेनैव परान् भिनत्तीत्यर्थः। न तान्रक्षानुपेक्षते येन तेऽपि विकुर्वीरन्नित्याह—क्रियेति। क्रियाऽपवर्गेषु कर्मसमाप्तिष्वनुजीविसात्कृताभृत्याधीनाः कृताः। अपरावर्तितया दत्ता इत्यर्थः। 'देये त्रा च' इति सातिप्रत्ययः। सम्पदोऽस्य राज्ञः कृतज्ञतामुपकारित्वं वदन्ति। प्रीतिदानैरेवास्य कृतज्ञत्वं प्रकाश्यते, न तु वाङ्मात्रेणेत्यर्थः। कृतज्ञे राजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च तं रक्षन्तीति भावः॥ १४ ॥

अन्वयः—शङ्कितः, (सन्नपि) परितः परेतरान् रक्षान् विधाय, अशङ्किताकारम्, उपैति। क्रियाऽपवर्गेषु, अनुजीविसात्कृताः सम्पदः, अस्य कृतज्ञतां वदन्ति॥ १४ ॥

सुधा—शङ्कितः=सन्देहापन्नः सन् न हि केषामपि विश्वासं कुर्वन्नित्यर्थः। परितः, स्वराष्ट्रे परराष्ट्रेऽपि, परेतरान्=आत्मीयान्, यस्मिन् जने सर्वथा विश्वासो, न हि स्वल्पोऽप्यविश्वासस्तानित्यर्थः। रक्षान्=रक्षकान्, कः केनाशयेन किं किं व्यापारं करोति, तत्सर्वथा गुप्तचित्तेन तटस्थेन सर्वं ज्ञातव्यमेवं सङ्केतितान्। कृत्वेत्यर्थः। (तदा) अशङ्किताकारम्=अचिन्तितचेष्टं, यथाऽन्येन ज्ञायते तद्दुर्योधनस्य हृदि न हि अल्पीयस्यपि शङ्का विद्यते, तदेत्यर्थः: उपैति=प्राप्नोति, अन्यान्, तथा दर्शयतीति भावः। तथा च क्रियाऽपवर्गेषु=कार्यसमाप्तिषु, कृत्यावसानेष्वित्यर्थः, अनुजीविसात्कृताः=अनुचरायत्तीकृताः, सम्पदः=सम्पत्तयः, अस्य=दुर्योधनस्य, कृतज्ञताम्=उपकारज्ञताम्, वदन्ति=कथयन्ति॥ १४ ॥

समासः—परेभ्य इतरे परेतरे तान् परेतरान्। शङ्का जाताऽस्येति शङ्कितः, न शङ्कितः अशङ्कितः, अशङ्कितः आकारो यस्मिन्निति क्रि० वि०। क्रियाया अपवर्गाः

क्रियापवर्गाः, तेषु। अनुजीविनामधीनाः कृताः अनुजीविसात्कृताः। कृतं जानातीति कृतज्ञस्तस्य भावःकृतज्ञताम् ॥ १४ ॥

व्याकरणम्—विधाय = वि + धा + क्त्वा + ल्यप्। उपैति = उप + इण् + लट्। वदन्ति = वद् + लट् ॥ १४ ॥

वाच्यान्तरम्—शङ्कितेन तेन परितः परेतरान् रक्षान् विधाय अशङ्कियाकारम् उपेयते, क्रियाऽपवर्गेषु अनुजीविसात्कृताभिः सम्पद्भिरस्य कृतज्ञता उच्यते ॥ १४॥

कोषः—'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः। 'अपवर्गोऽवसानन्तु मोक्षोऽपि च निगद्यते' इति। 'अथ सम्पदि सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः॥१४॥

भावार्थः—प्रकृत्याऽविश्वस्तोऽपि स दुर्योधनः आत्मीयान् जनान् राजकार्येषु नियुज्य कथमेते राज्यपक्षं पोषयन्तीति गुप्तरूपेण पश्यन् बहिर्विश्वस्तः इव लक्ष्यते। तथा च भृत्येषु दत्तस्य कार्यसाधननियोगस्य संसिद्धौ तेभ्यो दत्ता बह्व्यः सम्पदः एव दुर्योधनस्य उपकारितां सूचयन्ति ॥ १४ ॥

भाषाऽर्थः—हर वक्त सबके ऊपर शक करता हुआ भी वह चारों तरफ सब कामों में अपने आत्मीयों को लगाकर खुद निःशंक ( निश्चित ) सा रहता है और काम-काजों के आखिरी में नौकरों के हाथ में दी हुई दौलत ही दुर्योधन की कृतज्ञता प्रकट करती है ॥ १४ ॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति—

अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५ ॥

अनारतमिति। तेन राज्ञा पदेषूपादेयवस्तुषु। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। सम्यगसङ्कीर्णमध्यस्तं च विभज्य विविच्य। विनियोग एव सत्क्रियाऽनुग्रहः। सत्कार इति यावत्। येषां ते लम्भिताः स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः। उपायाः सामादयः सङ्घर्षं परस्परस्पर्धामुपेत्येवेत्युत्प्रेक्षा। परिबृंहितायतीः प्रचितोत्तरकालाः। स्थिरा इत्यर्थः। अर्थसम्पदोऽनारतमजस्रं फलन्ति। प्रसुवत इत्यर्थः ॥ १९ ॥

अन्वयः—तेषु पदेषु सम्यग् विभज्य लम्भिताः, विनियोगसत्क्रियाः, उपायाः, सङ्घर्षम्, उपेत्य इव परिबृंहितायतीः, अर्थसम्पदः, अनारतम् फलन्ति ॥ १५ ॥

सुधा—तेन = राज्ञा दुर्योधनेन, पदेषु = उपादेयवस्तुषु, सम्यक् = यथोचितम्, विभज्य = विभागं कृत्वा, लम्भिताः = यथास्थानं, प्रयुक्ताः, विनियोगसत्क्रियाः = धनदानरूपसत्कारवन्तः, उपायः = सामादयः, सङ्घर्षम् = अन्योन्यस्पर्धाम्, उपेत्य = प्राप्य इव, परिबृंहितायतीः = प्रचितोत्तरकालाः, अर्थसम्पदः=धनसम्पत्तीः, अनारतं = सततं, फलन्ति = साधयन्ति इत्यर्थः ॥ १५ ॥

समासः—विनियोग एव सत्क्रिया येषां ते विनियोगसत्क्रियाः । अर्थाः एव सम्पदः अर्थसम्पदः । परिबृंहित आयतिर्यासां ताः परिबृंहितायतयः, ताः ॥ १५ ॥

व्याकरणम्—अभिताः = लभि + क्तः । विभज्य = वि + भज् + क्त्वा = ल्यप् । फलन्ति = फल् + लट् ॥ १५ ॥

वाच्यान्तरम्—विनियोगसत्क्रियैरुपायैरर्थसम्पदः फल्यन्ते ॥ १५ ॥

कोषः—सततानारताश्रान्तसन्ततविरतानिशम्' इत्यमरः । 'पदं व्यवसित-त्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ १५ ॥

सारार्थः—दुर्योधनविहिताः सामदानदण्डभेदाः अभ्युदयपरिणामा भवन्तः पर-स्परस्पर्धां कुर्वन्त इव सकलश्रियः फलन्ति । न कुत्रापि ते विफला भवन्ति ॥ १५ ॥

भाषार्थः—वह दुर्योधन हर एक विषयों में जो साम, दान, दण्ड, भेद उपाय करता है, ये एक दूसरे से स्पर्धा रखते हुए के समान भविष्य में उन्नतिशील होकर नाना प्रकार की दौलतें पैदा करते हैं, अर्थात् किसी काम में उसकी कुछ भी हानि नहीं होती है ॥ १५ ॥

अर्थसम्पदमेवाह—

अनेकराजन्यरथाश्वसङ्कुलं तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृश नृपोपायनदन्तिनां मदः ॥ १६ ॥

अनेकेति । अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्यासावयुग्मच्छद-गन्धिः । 'सप्तम्युपमान'—इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । 'उपमानाच्च' इति सामासान्त इकारः । नृपाणामुपायनान्युपहारभूता ये दन्तिनस्तेषां मदः । 'उपा-यनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । राज्ञामपत्यानि पुमांसो राजन्याः क्षत्रियाः । 'राजश्वशुराद्यत्' इति यत्प्रत्ययः । राज्ञोऽपत्ये जातिग्रहणादन् । रथाश्चाश्वाश्च रथा-श्वम् । सेनाङ्गत्वादेकवद्भावः । अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं व्याप्तं तदीय-मास्थाननिकेतनाजिरं सभामण्डपाङ्गनं भृशमत्यर्थमार्द्रतां पङ्किलत्वं नयति । एतेन महासमृद्धिरस्योक्ता । अत एवोदात्तालङ्कारः । तथा चालङ्कारसूत्रम्—'समृद्धि-मद्वस्तुवर्णनमुदात्तः' इति ॥ १६ ॥

अन्वयः—अयुग्मच्छदगन्धिः नृपोपायनदन्तिनां, मदः, अनेकराजन्यरथाश्व-सङ्कुलं, तदीयम् , आस्थाननिकेतनाजिरं, भृशम्, आर्द्रतां, नयति ॥ १६ ॥

सुधा—अयुग्मच्छदगन्धिः = सप्तपर्णपुष्पसुगन्धिः, नृपोपायनदन्तिनाम्=करद-भूपोपहारीकृतहस्तिनाम्, मदः = दानवारि, गण्डस्थलनिःसृतजलविशेषः ( कर्ता ) । अनेकराजन्यरथाश्वसङ्कुलम् = नानानरपतिवृन्दरथघोटकसङ्कीर्णम् , तदीयम्=दुर्योध-नीयम् , आस्थाननिकेतनाजिरम् = सभामण्डपाङ्गनम् , भृशम् = अत्यर्थम् , आर्द्र-ताम् = पङ्किलत्वम् , नयति = प्रापयति ॥ १६ ॥

समासः—राज्ञां समूहो राजन्यो वा राज्ञामपत्यानि पुमांसो राजन्याः क्षत्रियाः । अनेके राजन्या इत्यनेकराजन्याः, रथाश्चाश्वाश्चेति रथाश्वं, तेषामनेकराजन्यानां यद् रथाश्वं, तद् अनेकराजन्यरथाश्वं तेनानेकराजन्यरथाश्वेन सङ्कुलमिति अनेकराजन्यरथाश्वसङ्कुलम् । आस्थानस्य निकेतनमास्थाननिकेतनम्, तस्य आस्थाननिकेतनस्याजिरमिति आस्थाननिकेतनाजिरम् । अयुग्मानि ( विषमाणि ), सप्त छदा ( पत्राणि ) यस्य सः, अयुग्मच्छदः। अयुग्मच्छदस्य गन्ध इव गन्धो यस्य सः युग्मच्छदगन्धिः । उपायनानि दन्तिनः इत्युपायनदन्तिनः नृपाणां ये उपायनदन्तिनः ते नृपोपायनदन्तिनः, तेषां नृपोपायनदन्तिनाम् ॥ १६ ॥

व्याकरणम्—नयति = नी + लट् ॥ १६ ॥

वाच्यान्तरम्—अयुग्मच्छदगन्धिना, नृपोपायनदन्तिनां मदेन, अनेकराजन्यरथाश्वसङ्कुलम्, तदीयम्, आस्थाननिकेतनाजिरम्, भृशम्, आर्द्रतां, नीयते ॥ १६ ॥

कोषः—'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः ।'अङ्गनं चत्वराजिरे' इत्यमरः । 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इत्यमरः । 'गण्डः कटो मदो दानम्' इत्यमरः ॥ १६ ॥

सारार्थः—करदभूपैरुपहारीभूतानां मत्तमातङ्गानां मदजलैस्तत्रागतनानानृपरथघोटकसङ्कीर्णं दुर्योधनस्य सभामण्डपाङ्गनं पङ्किलत्वं पिच्छिलत्वं च विधीयते ॥१६॥

भाषाऽर्थः—सप्तपर्ण ( छतिवन ) के फूल के समान गन्धवाले, राजाओं के नजराने में आये हाथियों का मदजल अगणित राजाओं के रथ और घोड़ों से भरे हुए, उस दुर्योधन के सभामण्डप के आँगन को गीला ( कीचड़ युक्त ) बनाता है ।

सम्प्रति जनपदक्षेमकरत्वमाह—

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन् कुरवश्चकासति ॥ १७ ॥

सुखेनेति—चिराय तस्मिन्दुर्योधने क्षेमं वितन्वति क्षेमङ्करे सति । देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः । ते न भवन्तीत्यदेवमातृकाः । नदीमातृकाः इत्यर्थः । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । एतेनास्य कुल्यादिपूर्णप्रवर्तकत्वमुक्तम् । कुरूणां निवासाः कुरवो जनपदविशेषाः । कृष्टेन पच्यन्त इति कृष्टपच्याः । 'राजसूय' इत्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः । तद्विपरीताः । अकृष्टपच्या इव । कृषिर्येषामस्तीति तैः कृषीवलैः । कर्षकैरित्यर्थः । 'रजःकृषि' आदिना वलच् प्रत्ययः । 'वले' इति दीर्घः । सुखेनाक्लेशेन लभ्या लब्धुं शक्याः सस्यसम्पदो दधतो धारयन्तः । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । चकासति सर्वोत्कर्षेण वर्तन्ते इत्यर्थः । 'अदभ्यस्तात्' इति झेरदादेशः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । सम्पन्नजनपदत्वादसन्तापकरत्वाच्च दुःसाध्योऽयमिति भावः ॥ १७ ॥

अन्वयः—चिराय, तस्मिन्, क्षेमं, वितन्वति, अदेवमातृकाः, कुरवः, अकृष्ट-पच्याः, इव, कृषिवलैः, सुखेन, लभ्याः, सस्यसम्पदः, दधतः, चकासति ॥ १७ ॥

सुधा—चिराय = चिरकालम्, तस्मिन् = दुर्योधने, क्षेमं = कुशलम्, प्रजास्वित्यर्थः वितन्वति = कुर्वति सति, प्रजानां सुखार्थं यत्र तत्र क्षेत्रसमीपे कूपप्रणालिका प्रभृतिजलवहविधिं, विधातरि दुर्योधने इत्यर्थः। येन वृष्ट्यभावेऽपि समये प्रजाजनो दुर्भिक्षक्षोभाकुलो न भवत्विति धियेति तत्त्वम्। अदेवमातृकाः = नदीमातृकाः, देवमातृकास्ते देशा येषु वृष्ट्या अन्नानि जायन्ते, तद्भिन्नास्तु नदीमातृकाः प्रोच्यन्ते; कुरवः = कुरूणां निवासा देशविशेषाः अकृष्टपच्याः = अकर्षणसिद्धाः इव, यथा हलादिभिः कर्षणं विनैव सस्यजनयितारस्तथैवेति भावः, कृषीवलैः = कर्षकैः कृषिकर्मकरैरित्यर्थं। सुखेन = अप्रचुरप्रयासेन, अल्पायासेनेत्यर्थः। लभ्याः = प्राप्याः, सस्यसम्पदः = सस्यराजीः, दधतः = धारयन्त इति भावः। चकासति = शोभन्ते, विराजन्ते, इति ॥ १७ ॥

समासः—देव एव माता येषां ते देवमातृकाः, न देवमातृका इति अदेवमातृकाः। कृषिरस्ति येषां ते कृषीवलास्तैः कृषीवलैः। 'रजःकृषि-' इत्यनेन वलच्-प्रत्ययः। कृष्टेन पच्यन्ते इति कृष्टपच्याः, न कृष्टपच्याः इत्यकृष्टपच्याः। सस्यस्य सम्पदः सस्यसम्पदः ॥ १७ ॥

व्याकरणम्—लभ्याः = लभ् + यत्। दधतः = धा = शतृ। वितन्वति = वि + तनु + लट् + शतृ। अकृष्टपच्याः = अकृष्ट + पच् + क्यप्। चकासति = चकास् + झि + लट् ॥ १७ ॥

वाच्यान्तरम्—चिराय तस्मिन् क्षेमं वितन्वति ( सति ) अदेवमातृकैः कुरुभिः अकृष्टपच्या इव कृषीवलैः सुखेन लभ्याः सस्यसम्पदः दधद्भिः चकास्यते ॥ १७ ॥

कोषः—'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः। 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः। 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः। 'क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः' इत्यमरः। 'वृक्षादीनां फलं सस्यम्' इत्यमरः ॥ १७ ॥

सारार्थः—प्रजापालनाय दुर्योधनः सस्यवृद्ध्यर्थं यत्र तत्र नदीप्रवाहतः प्रणालिकाप्रभृतिजलवहमार्गं विधाय स्वराज्याद् दुर्भिक्षं दुरीकृत्य तथा करोति, तथा तत्प्रजाः विना प्रयासेन स्वेनैव जातानीव सस्यानि। लेभिरे ॥ १७ ॥

भाषाऽर्थः—बहुत दिनों से प्रजाओं के हित के लिए उपाय करते रहते दुर्योधन के आधिपत्य में नदीमातृक कुरुदेशवाले बिना जोते ( बिना प्रयास के ही ) उपजे हुए के समान अनाजवाले किसानों से सम्पन्न जायदाद को धारण करते हुए सुशोभित हैं ॥ १७ ॥

नन्वेवं जनपदानुवर्तिनः कथमर्थलाभ इत्यत आह—

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥ १८ ॥

उदारेति—उदारकीर्तेर्महायशसः । 'उदारो दातृमहतोः' इत्यमरः । दयावतः परदुःखप्रहाणेच्छोः । अत एव प्रशान्तबाधं प्रशमितोपद्रवं यथा स्यात्तथेति क्रियाविशेषणम् उदयविशेषणं वा । 'वा दान्तशान्त—'इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेनोदयं वृद्धिं दिशतः सम्पादयतो वसूपमानस्य कुवेरोपमस्य । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अस्य दुर्योधनस्य गुणैर्दयादाक्षिण्यादिभिरुपस्नुता द्राविता मेदिनी वसूनि धनानि । 'वसु तोये धने मणौ' इति वैजयन्ती । स्वयं प्रदुग्धे । अक्लेशेन दुह्यत इत्यर्थः दुहेः कर्मकर्तरि लट् । 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधः । यथा केनचिद्विदग्धेन नवप्रसूता रक्षिता च गौः स्वयं प्रदुग्धे तद्वदिति भावः । अलङ्कारस्तु—'विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति सर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृताङ्गया मेदिन्या भेदेऽभेदलक्षणातिशयोक्तिवशाद्दोह्यत्वेनोक्तिरिति संक्षेपः ॥१८॥

अन्वयः—उदारकीर्त्तेः, दयावतः अभिरक्षया, प्रशान्तबाधम् , उदयं, दिशतः, वसूपमानस्य, अस्य, गुणैः, उपस्नुता, मेदिनी, स्वयं वसूनि, प्रदुग्धे ॥ १८ ॥

सुधा—उदारकीर्त्तेः = विततयशसः, दयावतः = करुणाऽन्वितस्य, अन्यजनक्लेशासहिष्णोरित्यर्थः । अभिरक्षया = सर्वथा रक्षणेन, प्रशान्तबाधम् = निरुपद्रवम्, उदयम् = अभ्युदयम्, उन्नतिमित्यर्थः । दिशतः = सम्पादयतः, विधातुरित्यर्थः । वसूपमानस्य = कुबेरोपमस्य, अस्य = दुर्योधनस्य, गुणैः = औदार्यगाम्भीर्यशौर्यादिभिः, उपस्नुता = द्राविता, मेदिनी = वसुन्धरा, पृथ्वीति वा, स्वयम् = आत्मनैव, अप्रेरितैवेत्यर्थः । वसूनि = धनानि, प्रदुग्धे = सुखेन दुह्यते इत्यर्थः, । यथा केनचिच्चतुरेण प्रसूता गौर्नवतृणग्रासादिभिः पोषिता सती दोहकं विलोक्य स्वयं हम्भारवं कृत्वा उपस्नुता भवति, तथैव दुर्योधनस्यालौकिकैर्गुणैर्मुदिता मही उर्वरा भूत्वा स्वयं धनानि जनयतीत्यर्थः ॥ १८ ॥

समासः—उदारा कीर्त्तिर्यस्य स उदारकीर्तिस्तस्योदारकीर्त्तेः । दयाऽस्यास्तीति दयावान् , तस्य दयावतः । अभितो रक्षाऽभिरक्षा, तयाऽभिरक्षया । प्रकर्षेण शान्ता बाधा यस्मिन्सः प्रशान्तबाधस्तं प्रशान्तबाधम् । वसुरुपमानं यस्य स वसूपमानः, तस्य वसूपमानस्य ॥ १८ ॥

व्याकरणम्—दिशतः = दिश् + शतृ । प्रदुग्धे = प्र + दुह् + लट् ॥ १८ ॥

वाच्यान्तरम्—उपस्नुतया मेदिन्या स्वयं वसूनि प्रदुह्यन्ते ॥ १८ ॥

कोषः—'कृपा दयाऽनुकम्पा स्याद्' इत्यमरः । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अत्र धनाधिपः कुबेरः । 'वसु तोये धने मणौ' इति वैजयन्ती ॥ १८ ॥

सारार्थः—यथा काऽपि नवप्रसूता गौर्नवकोमलतृणग्रासादिदानेन पोषिता तं ग्रासदायकं विलोक्य हर्षिता भूत्वा स्वयं दुग्धं क्षरति, तथैव प्रणिपातेन परितः प्रजाः परिपालयता, यत्र तत्र निर्जले जलाशय—नल-प्रणालिकादि-जलप्रवाहेण, कुत्रचिद्रोगोपद्रवान्विते प्रान्ते वैद्यालयनिर्माणपूर्वकौषधिदानेन, कुत्रचिद् दुर्भिक्ष-पीडिते जनपदे यत्र तत्रानाथालयान्नदानालयादिरचनेन वशीकृताः प्रजाजना राजकीयधनसञ्चयविधायकजनानुज्ञामन्तरेणैव समये करं दुर्योधनाय ददतीत्यर्थः ॥

भाषाऽर्थः—निर्मल यश और दयावाले, सब प्रकार की रक्षा से प्रजाओं की निरुपद्रव उन्नति करते हुए कुबेर के सरीखे धनाढ्य उस दुर्योधन के गुणों से पेन्हाई हुई पृथ्वी स्वयं धनरूप ( दुग्ध ) देती है ॥ १८ ॥

वीरभटानुकूल्यमाह—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
नसंहतास्तस्य नभिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥१९॥

महौजस इति—महौजसो महाबलः । अन्यथा दुर्बलानामनुपकारित्वादिति भावः । मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः । अन्यथा कदाचिद् बलदर्पाद्विकुर्वीरन्निति भावः, धनर्चिताः धनैरर्चिताः सत्कृताः । अन्यथा दारिद्र्यादेनं जह्युरिति भावः । संयति सङ्ग्रामे लब्धकीर्तयः । बहुयशस इत्यर्थः । अन्यथा कदाचिन्मुह्येयुरिति भावः । संहता मिथः सङ्गताः स्वार्थनिष्ठा न भवन्तीति नसंहताः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । भिन्नवृत्तयो मिथो विरोधात्स्वामिकार्यकरा न भवन्तीति नभिन्नवृत्तयः । पूर्ववत्समासः । अन्यथा स्वामिकार्य-विघातकतया स्वामिद्रोहिणः स्युरित्युभयत्रापि तात्पर्यार्थः । धनुर्भृतो धानुष्काः । आयुधीयमात्रोपलक्षणमेतत् । प्राधान्याद्धनुर्ग्रहणम् । तस्य दुर्योधनस्यासुभिः प्राणैः प्रियाणि समीहितुं कर्तुं वाञ्छन्ति । आनृण्यार्थं प्राणान्दातुमिच्छन्ति । अन्यथा दोषस्मरणादिति भावः । अत्र महौजसादिपदार्थानां प्राणदानकर्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात्काव्यलिङ्गमलङ्कारः । लक्षणं तूक्तम् । तथा साभिप्राय-विशेषणत्वात्परिकरालङ्कार इति द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः॥१९॥

अन्वयः—महौजसः, मानधनाः, धनार्चिताः, संयति, लब्धकीर्तयः, धनुर्भृतः, नसंहताः, नभिन्नवृत्तयः, ( अपि तु ) तस्य असुभिः, प्रियाणि, समीहितुम्, वाञ्छन्ति ॥ १९ ॥

सुधा—महौजसः = अतितेजस्विनः, मानधनाः = मनस्विनः धनार्चिताः = धनसत्कृताः, संयति = युद्धे, समरे, लब्धकीर्तयः = प्राप्तयशसः, वीरभटा इत्यर्थः । धनुर्भृत, = धनुराः, नसंहताः = मिथः स्वार्थसिद्धयै न मिलिताः, अर्थादहमहमिकया सर्वे स्वामिहितकरणतत्परा इत्यर्थः । तथा च, नभिन्नवृत्तयाः=पृथग्व्यापारः,

न सन्ति । सर्वे स्वाभ्यभिलाषपूरणैकलक्ष्यवन्तः सन्तीत्यर्थः । तथाऽऽह, अपि तु सर्वे वीराः, तस्य = दुर्योधनस्य, असुभिः = प्राणैः, अपि, प्रियाणि = शुभानि, समीहितुम् = विधातुम्, वाञ्छन्ति = इच्छन्ति, अभिलषन्तीत्यर्थः ॥ १९ ॥

समासः—महद् ओजो येषां ते महौजसः । मान एव धनं येषां ते मानधनाः । धनैः पारितोषिकरूपैरर्चिता धनार्चिताः। लब्धा कीर्तिर्यैस्ते लब्धकीर्त्तयः । धनुर्भृतः धनूंषि बिभ्रतीति धनुर्भृतः, भिन्ना वृत्तिर्येषां ते भिन्नवृत्तयः ॥ १९ ॥

व्याकरणम्—वाञ्छन्ति = वाञ्छि + लट् । समीहितुम्=सम् + ईह + तुमन् ॥१९॥

वाच्यान्तरम्—महौजोभिः मानधनैर्धनार्चितैः धनुर्भृद्भिः संयति लब्धकीर्तिभिः नसंहतैः नभिन्नवृत्तिभिः भूयन्ते । किन्तु असुभिरपि प्रियाणि समीहितुं वाञ्छ्यन्ते ॥ १९ ॥

कोषः—'बृहद्विशालं पृथुलं महत्' इत्यमरः । 'ओजो दीप्तौ बले' इत्यमरः । 'धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः, इत्यमरः । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् । अस्त्रियां समरानीकरणाः कलहविग्रहौ । इत्यमरः । 'यशः कीर्तिः समज्ञा च' इत्यमरः । 'आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने ।' इत्यमरः । 'पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम्' इत्यमरः ॥ १९ ॥

सारार्थः—अतिबला अहङ्कारिणो लब्धानेकपारितोषिकाः, युद्धलब्धयशसो वीरा भटा दुर्योधनस्वामिनः कल्याणं प्राणैरपि कुर्वन्तीति ॥ १९ ॥

भाषाऽर्थः—बड़े बलवाले, अभिमान ही धन है जिनके ऐसे और मौके पर पारितोषिक आदि द्वारा धनों से सम्मान पाये हुए और संग्राम मे यश (जय) पाने वाले योद्धा लोग अपने स्वार्थसाधन के लिये मिले हुए नहीं हैं, वे सबके सब एक ही लक्ष्य पर निर्भर हैं और अपनी जानों से भी उस दुर्योधन का हित करना चाहते हैं ॥ १९ ॥

सम्प्रति स्वराष्ट्रवत्परराष्ट्रवृत्तान्तमपि वेत्तीत्याह—

महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥ २० ॥

महीभृतामिति । अशेषितक्रियः । समापितकृत्यः । आफलोदयकर्मेत्यर्थः । स दुर्योधनः । सच्चरितैः शुद्धचरितैः । अवञ्चकैरित्यर्थः । चरन्तीति चरास्तैश्चरैः प्रणिधिभिः । पचाद्यच् । महीभृतां क्रियाः प्रारम्भान्निःशेषं वेद वेत्ति । 'विदो लटो वा' इति णलादेशः । स्वरहस्यं तु न कश्चिद्वेदेत्याह–महोदयैरिति । धातुरिव तस्य दुर्योधनस्येहितमुद्योगो महोदयैर्महावृद्धिभिः । हितमनुबध्नन्त्यनुबन्धन्तीति हितानुबन्धिभिः । स्वन्तैरित्यर्थः । फलैः कार्यसिद्धिभिः प्रतीयते ज्ञायते । फलानुमेयास्तस्य प्रारम्भा इत्यर्थः ॥ २० ॥

अन्वयः—अशेषितक्रियः, सः, सच्चरितैः, चरैः, महीभृताम्, क्रियाः, निःशेषम्, वेद, हितानुबन्धिभिः महोदयैः, धातुः, ईहितम्, इव, तस्य, ( ईहितम् ) फलैः, प्रतीयते ॥ २० ॥

सुधा—अशेषितक्रियः = समापितकृत्यः, सः = दुर्योधनः, सच्चरितैः = सत्यशीलैः, चरैः = गूढचरैः, महीभृताम् = भूपतीनाम्, क्रियाः = सकलव्यापारान्, निःशेषम् = अशेषम्, सकलमित्यर्थः, यथा स्यात्तथेति योज्यम् । वेद = जानाति, न किमपि तादृक् परेषां भूपानां कर्म, यद् दुर्योधनेन न ज्ञायते इति भावः । अर्थात्सर्वं ज्ञायते एव । अथ हितानुबन्धिभिः = सदा कल्याणकरणतत्परैः, महोदयैः = महानुभावैः, अन्यैर्भूपैरित्यर्थः । धातुः = ईश्वरस्य, ईहितम् = चेष्टितम्, एव, तस्य = दुर्योधनस्य, ईहितम् = ईप्सितम्, फलैः = परिणामैः, प्रतीयते = ज्ञायते । यथेश्वरस्य 'केनाशयेन किं कर्म करोती'ति पूर्वं कोऽपि न जानाति । पश्चात्तत्कर्म विलोक्यास्यार्थ एव इदम्' दावीश्वरेण कृतमिति जानाति । तथैव दुर्योधनस्यापि चेष्टितं कार्यपरिणामं विलो-क्येव सर्वैर्ज्ञातं भवतीति भावः ॥ २० ॥

समासः—महीं बिभ्रतीति महीभृतस्तेषां महीभृताम्, सत् शुभं चरितं येषां ते सच्चरितास्तैः, न शोषिता अशेषिता अशेषिता क्रिया येन सः अशेषितक्रियः । महानुदयो येषां ते महोदयास्तैर्महोदयैः । हितमनुबध्नन्तीति हितानुबन्धिनस्तै-र्हितानुबन्धिभिः ॥ २० ॥

व्याकरणम्—वेद = विद् + लट् । प्रतीयते = प्रति + इण् = लट् ॥ २० ॥

वाच्यान्तरम्—अशेषितक्रियेण येन दुर्योधनेन सच्चरितैश्चरैरन्येषां महीभृतः क्रियाः ज्ञायन्ते ( विद्यन्ते ), हितानुबन्धिना महोदयाः धातुरीहितमिव तस्य चेष्टितम्, फलैः प्रतियन्ति ॥ २० ॥

कोषः—'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ' इत्यमरः । 'स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः' इत्यमरः ॥ २० ॥

सारार्थः—सर्वाङ्गसिद्धिशाली दुर्योधनोऽन्येषां कर्त्तव्यं गूढचरैः सर्वं जानाति, दुर्योधनस्य चिकिर्षितं प्राक्कोऽपि न वेत्ति । यदा तत्कृत्यपरिणामः प्रकटीभवति तदैव फलं दृष्ट्वा वृक्षपरिचयवत्तत्कृतं पश्चाज्जानातीति ॥ २० ॥

भाषाऽर्थः—जिस काम को आरम्भ करता है, उसको पूरा करने वाला यह दुर्योधन गूढचरों के द्वारा अन्य राजाओं की करामात समझता है । लेकिन उसके प्रेमी महानुभाव जन भी, ईश्वर की इच्छा के समान उसकी इच्छा को सिर्फ आखिरी नतीजे से ही समझ पाते हैं ॥ २० ॥

मित्रबलमाह—

न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥ २१ ॥

नेति । तेन राज्ञा क्वचित्कुत्रापि । सह ज्यया मौर्व्या सज्यम् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । धनुर्नोद्यतं नोर्ध्वीकृतम् । आननं च कोपविजिह्मं कोपकुटिलं न कृतम् । यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भावः । कथं तर्ह्याज्ञां कारयति राज्ञ इत्यत्राह—गुणेति । गुणेषु दयादाक्षिण्यादिष्वनुरागेण प्रेम्णा । माल्यपक्षे सूत्रानुषङ्गेण । यद्वा, सौरभ्यगुणलोभेन । नराधिपैरस्य शासनमाज्ञा । मालैव माल्यं तदिव । 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् इति क्षीरस्वामी । शिरोभिरुह्यते धार्यते । 'वचिस्वपियजादीनां किति' इति यकि सम्प्रसारणम् । अत्रोपमा स्फुटैव ॥ २१ ॥

अन्वयः—तेन, क्वचित्, सज्यं, धनुः, न, उद्यतम्, वा कोपविजिह्मम्, आननम्, न, कृतम्, गुणानुरागेण, नराधिपैः, अस्य, शासनम्, माल्यमिव, शिरोभिः, उह्यते ॥

सुधा—तेन = राज्ञा' दुर्योधनेन, क्वचित् = कुत्रापि, सज्यम् = सशिञ्जिनीकम् आरोपितमौर्वीकमित्यर्थः । धनुः = कोदण्डम्, न, उद्यतम् = नोत्तानितम्, वा = तथा च, कोपविजिह्मम् = क्रोधकुटिलम्, अमर्षवैकृत्यम्, आननम् = मुखम्, न कृतम् = न विहितम् । अर्थात्सर्वे भूपतयोऽस्य शासनानुसारेणैव चलन्ति, न हि केऽपि तत्प्रतिकूलाः सन्त्यत एव दुर्योधनस्य न हि धनुरुत्तानावसरो नहि वा क्रोधकरणावश्यकतेति भावः । तथैवाह—नराधिपैः = नरेन्द्रैः, भूपतिभिः, गुणानुरागेण=दयादाक्षिण्यादिस्नेहेन, अस्य=दुर्योधनस्य, शासनम्=आदेशवचः, माल्यम्=स्रक्, ग्रथितपुष्पसमूहः इव, शिरोभिः=शीर्षैः, उह्यते=धार्यते । तथा च माल्यमपि सूत्रबद्धं सदैव भूपतिभिर्धार्यते इति शेषः ॥ २१ ॥

समासः—ज्यया सहितं सज्यम् । कोपेन विजिह्मं कोपविजिह्मम् । गुणेष्वनुरागो गुणानुरागस्तेन गुणानुरागेण । नराणामधिपा नराधिपास्तैर्नराधिपैः ॥ २१ ॥

व्याकरणम्—उह्यते—वह + कर्मणि लट् ॥ २१ ॥

वाच्यान्तरम्—स क्वचित् सज्यं धनुः नोद्यतवान् । वा कोपविजिह्मम् आननं न कृतवान् । नराधिपाः गुणानुरागेण अस्य शासनं माल्यमिव शिरोभिर्वहन्तीति ॥

कोषः—'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । 'कोपक्रोधामर्षरोषप्रतिघा रुट् क्रुधौ स्त्रियौ' इत्यमरः । 'अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । 'माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकाः' ॥ २१ ॥

सारार्थः—दुर्योधन एवं दयादाक्षिण्यादिगुणैः राष्ट्रं पालयति, येन न कोऽपि जनः तद्विरुद्धाचरणशीलोऽस्ति । न कुत्रापि दुर्योधनस्य क्रोधावसरो जातः । अपि तु 'तत्प्रजापालनपद्धतिदर्शनप्रसन्नाः राजानो माल्यमिव तच्छासनं धारयन्ति' शिरोभिरिति ॥ २१ ॥

भाषाऽर्थः—दुर्योधन ने कहीं भी रोदा चढ़ाकर धनुष को नहीं उठाया, न तो कभी क्रोधवश मुख ही टेढ़ा किया। आश्रित राजा लोग भी उसके गुणों के अनुराग से उसकी आज्ञा को माला के समान शिर पर धारण करते हैं ॥ २१ ॥

सम्प्रत्यस्य धार्मिकत्वमाह—

स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ॥ २२ ॥

स इति । इद्धशासनोऽप्रतिहताज्ञः स दुर्योधनो नवयौवनोद्धतं प्रगल्भम् । धुरन्धरमित्यर्थः । दुःखेन शास्यत इति दुःशासनस्तम् । 'भाषायां शासियुधि'-इत्यादिना खलर्थे युच्प्रत्ययः । यौवराज्ये युवराजकर्मणि । ब्राह्मणादित्वात्ष्यञ् । निधाय । नियुज्येत्यर्थः । पुरोधसा पुरोहितेनानुमतोऽनुज्ञातः । तस्मिन्याजके सतीत्यर्थः । तदुल्लङ्घने दोषस्मरणादिति भावः । 'निष्ठा' इति भूतार्थे क्तः । न तु 'मतिबुद्धि' इत्यादिना वर्तमानार्थे । अन्यथा 'पुरोधसा इत्यत्र 'क्तस्य च वर्तमाने' इति षष्ठी स्यात् । अखिन्नोऽनलसो मखेषु क्रतुषु हव्येन हविषा । हिरण्यं रेतो यस्य तं हिरण्यरेतसमनलं धिनोति प्रीणयति । धिन्वेः प्रीणनार्थाद् 'धिन्विकृण्व्योर च' इत्युप्रत्ययः । अकारश्चान्तादेशः ॥ २२ ॥

अन्वयः—इद्धशासनः, सः, यौवराज्ये, नवयौवनोद्धतम्, दुःशासनम्, निधाय, मखेषु, अखिन्नः, पुरोधसा, अनुमतः, (सन्) हव्येन, हिरण्यरेतसम्, धिनोति ॥२२॥

सुधा—इद्धशासनः = उग्राज्ञाकरः, सः = दुर्योधनः, यौवराज्ये=युवराजाधिकारे, नवयौवनोद्धतम्=अभिनवतारुण्यप्रगल्भम्, दुःशासनम् = एतन्नामानम्, निधाय = निवेश्य, मखेषु = यज्ञेषु, अखिन्नः=प्रसन्नः, अव्यग्र इत्यर्थः । यज्ञकर्मणि व्यग्रचित्तस्य न हि तत्फलाप्तिर्भवतीत्यत उचितमेवैतत् । पुरोधसा = पुरोहितेन । अनुमतः = अनुज्ञातः । यथा यथाऽऽदिशति पुरोहितस्तथा तथा, न हि तत्पृथक्किमपि; पृथक्कर्मकरणेन पुरोधसोऽपमानेन यज्ञफलप्राप्तिर्नेति । हव्येन = हविषा, घृत-यव-तिल-प्रभृतिनेति भावः । हिरण्यरेतसम् = अग्निम्, धिनोति = जुहोति । न केवलमैहिकं लोकरञ्जनं क्रियते, अपि तु पारलौकिकोऽपि धर्मोऽनुष्ठीयते तेन, तद्वशतोऽपि प्रजा-कल्याणमेव भवति । धर्मवतो राज्ञो राज्ये न हि जनाः क्लेशभागिनो भवन्तीति ॥

समासः—युवा राजा युवराजस्तस्य कर्म यौवराज्यम्, तस्मिन् यौवराज्ये । नवं यौवनं नवयौवनम्, नवयौवनेन उद्धतो नवयौवनोद्धतस्तं नवयौवनोद्धतम् । इद्धं शासनं यस्य स इद्धशासनस्तमिद्धशासनम् । न खिन्नः, अखिन्नः । हिरण्यं सुवर्णं रेतो यस्य स हिरण्यरेतास्तं हिरण्यरेतसम् ॥ २२ ॥

व्याकरणम्—निधाय = नि + धा + क्त्वा + ल्यप् । धिनोति = धिवि + लट् + वस्योत्वं उप्रत्ययश्च ॥ २२ ॥

वाच्यान्तरम्—तेन इद्धशासनेन यौवराज्ये नवयौवनोद्धतं दुःशासनं निधाय मखेषु अखिन्नेन पुरोधसाऽनुमतेन हव्येन हिरण्यरेताः धिन्व्यते ॥ २२ ॥

कोषः—'जनको युवराजस्तु कुमारो भर्तृदारकः' इत्यमरः। 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः। 'पुरोधास्तु पुरोहितः' इत्यमरः। 'हिरण्यरेत हुतभुग्दहनो हव्यवाहनः' इत्यमरः ॥ २२ ॥

सारार्थः—उग्रशासनो दुर्योधनो महाराजः राज्यकार्ये स्वकनिष्ठभ्रातरं दुःशासननामानं नियुज्य स्वयं निश्चिन्तो भूत्वा पुरोहितादेशानुसारं यज्ञं च करोति ॥ २२ ॥

भाषाऽर्थः—कठोर शासन करने वाला दुर्योधन अपने छोटे भाई दुःशासन को युवराज बनाकर स्वयं यज्ञ में निश्चिन्त रूप से पुरोहित के आज्ञानुसार हव्य से अग्नि को सन्तुष्ट करता है ॥ २२ ॥

न चैतावता निरुद्योगैर्भाव्यमित्याशङ्क्याशां दर्शयति—

प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ॥ २३ ॥

प्रलीनेति । स दुर्योधनः । प्रलीनभूपालम् । निःसपत्नमित्यर्थः । स्थिरायति । चिरस्थायीत्यर्थः । भुवो मण्डलमावारिधिभ्य आवारिधि । आङ्मर्यादाऽभिविध्योः इत्यव्ययीभावः । प्रशासदाज्ञापयन्नपि । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । त्वत् त्वत्त एष्यतीरागमिष्यतीः । धातूनामनेकार्थत्वादुक्तार्थसिद्धिः अथवाऽऽङ्पूर्वः पाठः । 'एत्येधत्यूठ्सु' इति वृद्धिः । 'लृटः सद्वा' इति शतृप्रत्ययः । 'उगितश्च' इति ङीप् । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । भियो भयहेतून् । विपद इत्यर्थः । चिन्तयत्यालोचयत्येव । स एवाह-अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्वभौमस्यापि प्रबलैः सह वैरायमाणत्वमनर्थपर्यवसाय्येवेति तात्पर्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

अन्वयः—सः, प्रलीनभूपालं, स्थिरायति, आवारिधि, भुवः, मण्डलम्, प्रशासत्, अपि, त्वदेष्यतीः भियः, चिन्तयति, एव । अहो, बलवद्विरोधिता, दुरन्ता (भवति) ॥

सुधा—सः = दुर्योधनः, प्रलीनभूपालम् = अप्रतिभभूपम्, अकण्टकम्, स्थिरायति = चिरस्थायि सदावर्त्तमानम्, आवारिधि = आसमुद्रम्, भुवः = पृथिव्याः, मण्डलम् = वलयम्, प्रशासत् = आज्ञापयन्, अपि, त्वदेष्यतीः = त्वदागमिष्यतीः, भियः = विपदः, चिन्तयति = आलोचयति; एव । कुत इत्याह—अहो इति सखेदोच्छ्वासे बलवद्विरोधिता = महाजनवैरिता, दुरन्ता = दुरवसाना, दुःखपरिणामा, भवतीति शेषः ॥ २३ ॥

समासः—प्रलीना भूपाला यस्मिन् तत् प्रलीनभूपालम् । स्थिरा आयतिरुत्तर-

कालो यस्य तत् स्थिरायति । आ वारिधिभ्य इति आवारिधि । बलमस्यास्तीति बलवान्, बलवद्भिः विरोधिता बलवद्विरोधिता ॥ २३ ॥

व्याकरणम्—प्रशासत्=प्र+शास्+लट्+शतृ । चिन्तयति=चिन्ति+लट् । एष्यतीः=इण्+लट्+शतृ+ङीष् ॥ २३ ॥

वाच्यान्तरम्—तेन दुर्योधनेन प्रलीनभूपालं स्थिरायति, आवारिधि भुवो मण्डलं प्रशासता, त्वदेष्यत्यो भियश्चिन्त्यन्ते एव। अहो बलवद्विरोधितया दुरन्तया भूयते ॥

कोषः—'उत्तरः काल आयतिः' इत्यमरः । 'उदधिर्वारिधिः सिन्धुः सागरश्च सरित्पतिः' इति कोषः । मण्डलं वलयं समम्' इति कोषः । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः ॥ २३ ॥

सारार्थः—निष्कण्टकमासमुद्र भूमण्डलमात्मायत्तं कृत्वाऽपि त्वत्तो बिभेत्येव । यतो महद्भिर्विरोधो नियतं कदापि समूलनाशायैव भवति । पद्यमिदं विशङ्कमानो भवतः पराभवमि'त्याद्यस्यानुच्छायेवास्ति ॥ २३ ॥

भावाऽर्थः—दुर्योधन के प्रताप के उदय होने से लुप्त हो गये हैं राजा लोग जहाँ और आगे के भी समय में किसी से टलने की शङ्का नहीं है जिनको, ऐसे समुद्र पर्यन्त भूमण्डल का शासन करता हुआ भी वह आप से आने वाले डर को सोचता ही है। क्योंकि अपने से बलिष्ठ के साथ विरोध करना कभी न कभी दुःख ही के लिये होता है ॥ २३ ॥

ननु गूढाकारेङ्गितस्य तस्य भयं त्वया कथं निरधारीत्यत्राह—

कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः ॥ २४ ॥

कथेति। कथाप्रसङ्गेन गोष्ठीवचनेन जनैः, तत्रत्यैरित्यर्थः । अन्यत्र कथाप्रसङ्गेन विषवैद्येन 'कथाप्रसङ्गो वार्तायां विषवैद्येऽपि वाच्यवत्' इति विश्वः । एकवचनस्यातन्त्रत्वाज्जनविशेषणम् । उदाहृतादुच्चारितात्तवाभिमानान्नामधेयात्स्मारकाद्धेतोः 'हेतौ' इति पञ्चमी । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। अन्यत्र तवाभिधानात्। 'नामैकदेशग्रहणे नाममात्रग्रहणम्' इति न्यायात् तश्च वश्च तवौ तार्क्ष्यवासुकी तयोरभिधानं यस्मिन्पदे तस्मात्। यद्वा, कथाप्रसङ्ग इनाश्च ते जनाश्चेत्येकं पदम् । अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्जुनपराक्रमः सन् दुःसहादतिदुःसहान्मन्त्रपदान्मन्त्रशब्दात्स्मारकाद्धेतोः । आखण्डलसूनुरिन्द्रानुजः । उपेन्द्रो विष्णुरिति यावत्। 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः । तस्य विः पक्षी । गरुड इत्यर्थः। तस्य क्रमः पादविक्षेपः। सोऽनुस्मृतो येन स तथोक्तः । स्मृतगरुडमहिमा । उरग इव, नताननः सन् । व्यथते दुःखायते ।'पीडा बाधा व्यथा दुःखम्' इत्यमरः ।

अत्युत्कटभयदोषादिविकारा दुर्वारा इति भावः। 'सर्वतो जयमन्विच्छेत्पुत्रा-दिच्छेत्पराजयम्' इति न्यायादर्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥ २४ ॥

अन्वयः—कथाप्रसङ्गेन, जनैः उदाहृतात्, तव, अभिधानात्, अनुस्मृताखण्डल-सूनुविक्रमः, नताननः, सः ( दुर्योधनः ), सुदुःसहात्, मन्त्रपदात्, उरगः, इव, व्यथते।

सुधा—कथाप्रसङ्गेन = वार्ताऽनुक्रमेण, जनैः = लोकैः, (वान्यपक्षे) कथाप्रसङ्गेन-जनैः = विषवैद्यप्रवरलोकैः। उदाहृतात् = उच्चारितात्, तव = भवतः, युधिष्ठिरादेरित्यर्थः। अभिधानात् = नाम्नः, ( वान्यपक्षे ) तवाभिधात् = तार्क्ष्यवासुकिनामकथनात्, अनुस्मृताखण्डलसूनुविक्रमः = स्मृतार्जुनपराक्रमः, ( वान्यपक्षे ) अनुस्मृता-खण्डलसूनुर्विक्रमः = स्मृतविष्णुपक्षिपद्रवेगः, स्मृतगरुडवेग इत्यर्थः। नताननः = नम्रमुखः सः, दुर्योधन इति शेषः। सुदुःसहात् = अतिदुःश्रवात्, मन्त्रपदात् = विषदूरीकरणवाक्यविशेषात्, उरगः = सर्पः, इव, व्यथते = दुःखायते ॥ २४ ॥

समासः—कथायाः प्रसङ्गः कथाप्रसङ्गस्तेन कथाप्रसङ्गेन। आखण्डलस्य सूनुः, आखण्डलसूनुः आखण्डलसूनोः विक्रमः आखण्डलसूनुविक्रमः, अनुस्मृतः, आखण्डल-सूनुविक्रमो येन सः अनुस्मृताखण्डलसूनुविक्रमः। तश्च वश्च तवौ, तार्क्ष्यवासुकी; तयोरभिधानमिति तवाभिधानं तस्मात्तवाभिधानात्। नतमाननं यस्य स नताननः। मन्त्रस्य पदं, मन्त्रपदम्, तस्माद् मन्त्रपदात् ॥ २४ ॥

व्याकरणम्—व्यथते = व्यथ = लट् ॥ २४ ॥

वाच्यान्तरम्—कथाप्रसङ्गेन जनैः उदाहृताद्, अनुस्मृताखण्डलसूनुविक्रमेण नताननेन तेन सुदुःसहान्मन्त्रपदाद् उरगेण इव तवाभिधानाद् व्यथ्यते ॥ २४ ॥

कोषः—'कथाप्रसङ्गो वार्तायां विषवैद्येऽपि' वाच्यवत्' इति विश्वः। 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। 'सूनुः पुत्रेऽनुजे रवौ इति विश्वः। 'आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रियाः' इत्यमरः। 'विक्रमः पादविक्षेपे सामर्थ्येऽपि च कथ्यते' इति। 'आस्यं मुखं तु वदनमाननं वक्त्रमित्यपि' इति कोषः।

सारार्थः—गोष्ठ्यां यदि वार्तायाः प्रसङ्गेन केनचिन्मुखाद्भवतश्चर्चां दुर्योधनः शृणोति, तदा साधारण्येन भवतां, विशेषार्जुनस्य पराक्रमं स्मृत्वा यथा विषदूरी-करणमन्त्रपाठश्रवणाद् विषधरः सर्पो विषं त्यक्त्वा स्वयं हतप्रतिभो भवति, तथा सोऽपि हतदर्पः सन् विषीदति ॥ २४ ॥

भाषाऽर्थः—आप लोगों के बारे में बातचीत चलने पर अर्जुन के पराक्रम को याद कर, जैसे मदारी का मन्त्र सुनकर साँप निर्विष हो जाता है, वैसे ही वह भी आप लोगों का नाम सुनकर नीचे मुख कर दुखित होता है ॥ २४ ॥

निगमयति—

तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां गिरः ॥ २५ ॥

तदिति। तत्तस्मात्त्वयि जिह्मं कपटं कर्तुमुद्यते। त्वां जिघांसावित्यर्थः। तत्र तस्मिन्दुर्योधने विधेयं कर्तव्यमुत्तरं प्रतिक्रियाऽऽशु विधीयतां क्रियताम्। ननु कर्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह—परेति। परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशाम्, वार्ताहराणामित्यर्थः। गिरः प्रवृत्तिसारा वार्तामात्रसाराः खलु। 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः। वार्तामात्रवादिनो वयम्, न तु कर्तव्यार्थोपदेशसमर्थाः, अतस्त्वयैव निर्धार्य कार्यमिति भावः। सामान्येन विशेषसमर्थनादर्थान्तरन्यासः ॥ २५ ॥

अन्वयः—तत्, त्वयि, जिह्मं, कर्तुम्, उद्यते, तत्र, विधेयम् उत्तरम्, आशु, विधीयताम्। परप्रणीतानि, वचांसि, चिन्वतां, मादृशां गिरः, प्रवृत्तिसाराः, खलु ॥ २५ ॥

सुधा—तत् = तस्मात्, त्वयि = भवति; भवतोऽर्थे इत्यर्थः। जिह्मं = कपटम्, कर्तुम् = विधातुम्; उद्यते = प्रवृत्ते तत्र = तस्मिन्, दुर्योधने इत्यर्थः। विधेयम् = कर्तव्यम्, उत्तरम् = प्रतीकारः, आशु = शीघ्रम्, विधीयताम् = क्रियताम्–अर्थाद्धर्मयुक्त्या भवन्तं जेतुमक्षमः कपटयुक्त्या जिगीषति। परप्रणीतानि = अन्योदितानि, वचांसि = वाक्यानि, चिन्वताम् = गवेषयतां, मादृशाम् = वनेचराणाम्, गिरः = वाचः प्रवृत्तिसाराः = वृत्तान्तमात्रसाराः, खलु = एव ॥ २५ ॥

समासः—परैः प्रणीतानि इति परप्रणीतानि। प्रवृत्तिरेव सारो यासां ताः प्रवृत्तिसाराः ॥ २५ ॥

व्याकरणम्—विधीयताम् = वि + धा + यक् + लोट्। चिन्वताम् = चिञ् + लोट् + शतृ ॥ २५ ॥

वाच्यान्तरम्—तत् त्वयि जिह्मं कर्तुम् उद्यते तत्र विधेयम् उत्तरं विधेहि। परप्रणीतानि वचांसि चिन्वतां मादृशां गीर्भिः प्रवृत्तिसाराभिर्भूयते ॥ २५ ॥

कोषः—'युक्तं विधेयं समयोचितं च परिकीर्तितम्' इति कोषः। 'प्रतिवाक्योत्तरे समे' इत्यमरः। 'गीर्वाग्वाणी सरस्वती' इत्यमरः। वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्', सारो बले स्थिरांशे च' इत्यमरः ॥ २५ ॥

सारार्थः—स च दुर्योधनः सदैव भवतश्छिद्रान्वेषी कपटेन जेतुमिच्छति भवन्तमत एव भवान् यथा तस्य पराजयः स्यात्तथा विचारयतु, कथं तस्य पराजयः स्यादिति नाहं वक्तुमर्होऽस्मि—अहं तु परसमाचारमात्रवाहक एव तेन यदत्र समयोचितं कृत्यं तत्त्वया सत्वरमेव कर्तव्यम् ॥ २५ ॥

भाषाऽर्थः—सो, आप से छल करने के लिए तैयार उस दुर्योधन के प्रति जो

ठीक उत्तर हो सो कीजिए। दूसरों के कहे हुए वचन का संग्रह करने वाले मेरे ऐसे आदमी की बात केवल समाचारज्ञापक ही होती है ॥ २५ ॥

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६ ॥

इतीति—वनसन्निवासिनां पत्यौ वनेचराधिप इति गिरमीरयित्वोक्त्वाऽऽत्तसत्क्रिये गृहीतपारितोषिके गते सति । 'तुष्टिदानमेव चाराणां हि वेतनम् । ते हि तल्लोभात्स्वामिकार्येष्वतीव त्वरयन्ते' इति नीतिवाक्यामृते । अथ महीभुजा राज्ञा कृष्णासदनं द्रौपदीभवनं प्रविश्यानुजसन्निधौ तद्वनेचरोक्तं वचो वाक्यमाचचक्ष आख्यातम् । अथवा कृष्णेति पदच्छेदः । सदनं प्रविश्यानुजसन्निधौ तद्वचः कृष्णाऽऽचचक्ष आख्याता । चक्षिङो दुहादेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट् ॥ २६ ॥

अन्वयः—अथ, इति, गिरम्, ईरयित्वा, गते, आत्तसत्क्रिये, वनसन्निवासिनां, पत्यौ, ( सति ) महीभुजा, कृष्णासदनं प्रविश्य, अनुजसन्निधौ, तद्, वचः, आचचक्षे ॥ २६ ॥

सुधा—अथ = ततः, इति = पूर्वोक्तां गिरम्, ईरयित्वा = उक्त्वा, निवेद्येत्यर्थः । गते = स्थानं प्रस्थिते, (तथा च) आत्तसत्क्रिये=गृहीतपारितोषिके; वनसन्निवासिनाम्=वनेचराणाम्, पत्यौ = स्वामिनि, सति ( तदा ) महीभुजा = भूपतिना, युधिष्ठिरेणेति शेषः । कृष्णासदनं = द्रौपदीभवनम् , प्रविश्य=अन्तर्गत्वा, अनुजसन्निधौ = भीमसमक्षे, तत् = वनेचरोक्तम्, वचः आचचक्षे = उक्तम् । वा महीभुजा; सदनम् = भवनम्, प्रविश्य, अनुजसन्निधौ कृष्णा तद् वचः, आचचक्षे = आख्यातेति शेषः ॥ २६ ॥

समासः—आत्ता गृहीता सत्क्रिया येन स आत्तसत्क्रियस्तस्मिन् आत्तसत्क्रिये । वने सन्निवसन्ति ये ते, तेषां वनसन्निवासिनाम् । कृष्णाया द्रौपद्याः सदनं कृष्णासदनम् । महीं भुनक्तीति महीभुक् तेन महीभुजा । अनुजस्य सन्निधिः अनुजसन्निधिस्तस्मिन्ननुजसन्निधौ ॥ २६ ॥

व्याकरणम्—ईरयित्वा = ईर् + णिच + क्त्वा । प्रविश्य = प्र + विश् + क्त्वा + ल्यप् । आचचक्षे = आङ् + चक्षिङ् + लिट् ॥ २६ ॥

वाच्यान्तरम्—इति ईरयित्वा आत्तसत्क्रिये वनसन्निवासिनां पत्यौ गते महीभुक् कृष्णासदनं प्रविश्य, वा सदनं प्रविश्यानुजसन्निधौ कृष्णां प्रति आचचक्षे ॥ २६ ॥

कोषः—'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । 'आत्तं गृहीतं स्वाधीनीकृतमात्मवशीकृतम्' इति कोषः । 'धवः पतिः प्रियो भर्ता' इत्यमरः । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । 'निशान्तपस्त्य सदनं भवनागारमन्दिरम्' इत्यमरः । 'सन्निधिः सन्निकर्षणम्' इत्यमरः ॥ २६ ॥

सारार्थः—यदा दुर्योधनस्य सकलं वृत्तान्तं युधिष्ठिराय निवेद्य एतत्कार्यसम्पादनपारितोषिकञ्च गृहीत्वा वनेचरश्चरः स्वगृहं गतस्तदा युधिष्ठिरोऽपि वनेचरप्रतिपादितं तदेव समाचारजातं भीमसमीपे स्थितां द्रौपदीं कथयितुं जगाम ॥ २६ ॥

भाषार्थः—यह पहले की बात कहने के बाद मालिक के दिये हुये पुरस्कार लेकर जब वनेचर अपने घर चला गया तब महाराज युधिष्ठिर ने घर के अन्दर जाकर अपने छोटे भाई ( भीम ) के सामने उस वनेचर की बातें द्रौपदी को बताई ॥ २६ ॥

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥ २७ ॥

निशम्येति । अथ द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं वृद्धिरूपां निशम्य ततस्तदनन्तरम् । ततो द्विषद्भ्य आगतास्ततस्त्याः । 'अव्ययात्त्यप्' इति त्यप् । अपाकृतीर्विकारान्विनियन्तुं निरोद्धुमक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोर्दीपिनीः संबन्धिनीः गिरो वाक्यान्युदाजहार । जगादेत्यर्थः ॥ २७ ॥

अन्वयः—ततः द्रुपदात्मजा, द्विषतां, सिद्धिं, निशम्य, ततस्त्याः, अपाकृतीः, विनियन्तुम्, अक्षमा, (सती) नृपस्य, मन्युव्यवसायदीपिनीः, गिरः, उदाजहार ॥

सुधा—ततः = युधिष्ठिरकथनानन्तरम्, द्रुपदात्मजा = द्रौपदी, द्रुपदपुत्रीति भावः । द्विषताम् = शत्रुणाम्, दुर्योधनप्रभृतीनाम्, सिद्धिम् = तदिष्टसिद्धिम्, राज्यलाभरूपामित्यर्थः । निशम्य = श्रुत्वा, स्वस्वामिमुखादित्यर्थः । ततस्त्याः = तत आगताः, अपाकृतीः = अपकारान्, विकारान् इत्यर्थः । विनियन्तुम् = निरोद्धुम्, अक्षमा=असमर्था सती, नृपस्य=युधिष्ठिरस्य, मन्युव्यवसायदीपिनीः=क्रोधोद्योगोद्द्योतिनीः, गिरः = वाचः, उदाजहार = उक्तवती । यथा प्रकृत्या शान्तचित्तस्य युधिष्ठिरस्य हृदये शत्रुप्रतीकारकरणार्थं बुद्धिरुत्तेजिता भवति, तथा जगादेत्यर्थः ।

समासः—द्रुपदस्य आत्मजा द्रुपदात्मजा । मन्युश्च व्यवसायश्च मन्युव्यवसायौ, तौ दीपयन्तीति मन्युव्यवसायदीपिन्यः, ताः मन्युव्यवसायदीपिनीः । तत आगतास्ततस्त्याः ॥ २७ ॥

व्याकरणम्—निशम्य = नि + शम् + क्त्वा + ल्यप् । उदाजहार + उत् + आ + हृ + लिट् ॥ २७ ॥

वाच्यान्तरम्—द्विषतां सिद्धिं निशम्य, ततः ततस्त्या अपाकृतीर्विनियन्तुम्, अक्षमया द्रौपद्या नृपस्य मन्युव्यवसायदीपिनीः गिरः उदाजह्रिरे ॥ २७ ॥

कोषः—'योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे' इत्यमरः । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः ॥ २७ ॥

सारार्थः—स्वपतिमुखेन वनचरोक्तं दुर्योधनवृत्तान्तं श्रुत्वा ततो जातामर्षक्षुभिता द्रौपदी यथा शत्रूणां संहारो भविष्यति तथा क्रोधोद्योगजनकं वाक्यं स्वपतेः पुरतो जगादेति ॥ २७ ॥

भाषाऽर्थः—अपने शत्रुओं की उन्नति सुनकर, चित्त के क्षोभ को नहीं छिपा सकने वाली द्रौपदी, अपने पति ( युधिष्ठिर ) के क्रोध और शत्रुनाश के लिये उद्योग कराने वाली बातें बोलने लगी ॥ २७ ॥

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथाऽपि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥ २८ ॥

भवादृशेष्विति । भवादृशा भवद्विधाः । पण्डिता इत्यर्थः तेषु विषये । 'त्यदादिषु—' इत्यादिना कञ् । 'आ सर्वनाम्न' इत्याकारादेशः । प्रमदाजनोदितं स्त्रीजनोक्तम् । वदेः क्तः 'वचिस्वपि०—' इत्यादिना सम्प्रसारणम् । अनुशासनं नियोगवचनमधिक्षेपस्तिरस्कार इव भवति । अतो न युक्तं वक्तुमित्यर्थः । तथाऽपि वक्तुमनुचितत्वेऽपि निरस्तनारीसमयास्त्याजितशालीनतारूपस्त्रीसमाचाराः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । दुराधयः समयोल्लङ्घनहेतुत्वाद् दुष्टा मनोव्यथाः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । मां वक्तुं व्यवसाययन्ति प्रेरयन्ति । न किञ्चिदवक्तं दुःखितानामिति भावः ॥ २८ ॥

अन्वयः—( यद्यपि ) भवादृशेषु, प्रमदाजनोदितम्, अनुशासनम्, अधिक्षेपः, इव, भवति, तथाऽपि, निरस्तनारीसमयाः, दुराधयः, मां वक्तुं, व्यवसाययन्ति ॥२८॥

सुधा—( यद्यपि ) भवादृशेषु = भवद्विधेषु, सर्वज्ञेष्विति । भावः । प्रमदाजनोदितम् = स्त्रीजनकथितम्, अनुशासनम् = उपदेशवचनम्, अधिक्षेपः = आक्षेपः, तिरष्कार इति वा, इव = तद्वत्, भवति = स्यात् । तथापि, दुर्वचत्वेऽपि, निरस्तनारीसमया = ध्वस्तस्त्रीशीला, दुराधयः = दुष्टमनोव्यथाः, मां = द्रौपदीम्, वक्तुम = कथयितुम्, व्यवसाययन्ति = प्रेरयन्ति, न त्वहं प्रकृत्या अपितु भवत्कर्तृकद्यूतपरित्यक्तस्त्रीसमुचितशालीनतया अगत्या वदामीति भावः ॥ २८ ॥

समासः—भवन्त इव दृश्यन्ते इति भवदृशाः, तेषु भवादृशेषु । प्रमदा एव जनः प्रमदाजनस्तेनोदितं प्रमदाजनोदितम् । नार्याः समयाः इति नारीसमयाः; निरस्ता नारीसमया यैस्ते निरस्तनारीसमयाः । दुर्दुष्टा आधयो दुराधयः ॥ २८ ॥

व्याकरणम्—भवति = भू + लट् । अनुशासनम् = अनु + शास् + ल्यु + (अन) । वक्तुम् = वच् + तुमुन् । व्यवसायन्ति = वि + अव + षो + णिच् + लट् ॥ २८ ॥

वाच्यान्तरम्—भवादृशेषु प्रमदाजनोदितेन अनुशासनेन अधिक्षेपेण इव भूयते । तथाऽपि निरस्तनारीसमयैर्दुराधिभिरहं वक्तुं व्यवसाय्यते ॥ २८ ॥

कोषः—'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । 'अधिक्षेपः

समावेशो व्यङ्ग्ययुक्तं वचोऽपि वा' इति कोषः समयाः शपथाचारकालसिद्धान्तसंविद' इत्यमरः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः ॥ २८ ॥

सारार्थः—यद्यपि सर्वज्ञेषु भवादृशेषु जनेषु स्त्रीजनकथितं वचो न युक्तं गुरुषु शिष्यानुशासनमिव; तथापि शत्रुतिरस्कारत्यक्तमच्छीलताऽस्मच्चित्तव्यथा मां वक्तुं प्रेरयति । अतो भवद्भिः क्रोधो न कर्त्तव्यः, सकारणं, ममेदृग् वचः प्रवर्त्तते ।

भाषाऽर्थः—आप लोगों जैसे महानुभावों के प्रति स्त्री लोगों को कही हुई बातें अपमान के समान है । तो भी ( क्या करूँ ) मेरे चित्त का दुःख मेरे उचित शील को हटाकर मुझे बोलने के लिए प्रेरणा करता है ॥ २८ ॥

अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयाऽऽत्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥ २९ ॥

अखण्डमिति । आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावः स्ववंशजैः भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नं धृता मही । त्वया, मदं च्योततीति मदच्युत् । क्विप् तेन मदस्राविणा मतङ्गजेन स्रगिवात्महस्तेन स्वकरेण, स्वचापलेनेत्यर्थः । अपवर्जिता परहृता त्यक्ता । स्वदोषादेवायमनर्थागम इत्यर्थः ॥ २९ ॥

अन्वयः—आखण्डलतुल्यधामभिः, स्ववंशजैः, भूपतिभिः, चिरम्, अखण्डं धृता, मही, मदच्युता, मतङ्गजेन, स्रक् , इव, त्वया, आत्महस्तेन, अपवर्जिता ॥ २९ ॥

सुधा—आखण्डलतुल्यधामभिः = इन्द्रसमतेजोभिः, स्ववंशजैः = निजपूर्वजैः, निजकुलजैरिति वा । भूपतिभिः = भूपैः, भरतादिभिरित्यर्थः । चिरं = दीर्घकालम्, अखण्डम् = सम्पूर्णम्, यथा स्यात्तथेति क्रियाविशेषणम् । धृता = धारिता, निजाधीनीकृतेति भावः । मही = पृथिवी, मदच्युता = दर्पजलस्राविणा, मतङ्गजेन = मातङ्गेन, मत्तेन हस्तिनेति भावः । स्रक् = माल्यम्, इव, त्वया = युधिष्ठिरेण, आत्महस्तेन = स्वकरेण; द्यूतविधाविति शेषः । अपवर्जिता = त्यक्ता, स्वप्रमादजनितैवेयमापत्तिर्न हि दैवकृतेति हेतोरात्मबलं सर्वथा कार्यं, न दैवस्याशया स्थातव्यमिति ॥ २९ ॥

समासः—आखण्डलेन तुल्यं धाम येषां ते आखण्डलतुल्यधामानः, तैः आखण्डलतुल्यधामभिः । स्वस्य वंशः स्ववंशः, स्ववंशाज्जायन्ते इति स्ववंशजास्तैः स्ववंशजैः । भुवः पतयो भूपतयस्तैर्भूपतिभिः । आत्मनो हस्त आत्महस्तस्तेनात्महस्तेन । मदं च्योततीति मदच्युत् तेन मदच्युता । मतङ्गाज्जायते इति मतङ्गजस्तेन मतङ्गजेन ॥

व्याकरणम्—धृता = धृ + क्तः । अपवर्जिता = अप + वृज् + क्तः ॥ २९ ॥

वाच्यान्तरम्—भूपतिभिर्धृतां महीं मदच्युत् मतङ्गज इव त्वमात्महस्तेन स्रजमिवापवर्जितवान् ॥ २९ ॥

कोषः—'आखण्डलः सहस्राक्ष' इत्यमरः । 'वाच्यलिङ्गाः समस्तुल्यः सदृक्ष

सदृशः सदृक्' इत्यमरः। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः। 'वंशोऽन्ववायः सन्तान' इत्यमरः। 'माल्यं मालास्रजौ' इत्यमरः। 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः ॥ २९ ॥

सारार्थः—इन्द्रसदृशपराक्रमवद्भिः स्ववंशजैर्भूपैश्चिरं मा स्ववशीकृता इयं समुद्रान्ता भूमिः, सा तु भवता मदमत्तहस्तिना माल्यमिव उच्छिद्यच्युतेन दूरीकृतेति।

भाषाऽर्थः—जिस समुद्र पर्यन्त पृथ्वी को, इन्द्र के समान पराक्रम वाले अपने कुल के राजा लोगों ने बराबर अपने अधीन रक्खा। उसको आपने अपने ही हाथ से खो दिया। जैसे मद से मतवाला हाथी अपने गले की माला तोड़कर फेंक दे॥

स्वदोषादेवायमर्थागम इत्युक्तम्। स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः॥ ३० ॥

व्रजन्तीति। मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति ते मायाविषु मायावत्सु विषये। 'अस्मायामेधा-' इत्यादिना विनिप्रत्ययः। मायाविनो मायावन्तः। व्रीह्यादित्वादिनिप्रत्ययः, न भवन्ति। अत्रैवार्थान्तरं न्यस्यति-प्रविश्येति। शठा अपकारिणो धूर्तास्तथाविधानकुटिलानसंवृताङ्गानवर्मितशरीरान्निशिता इषव इव प्रविश्य प्रवेशं कृत्वाऽऽत्मीया भूत्वा घ्नन्ति हि। 'आर्जवं हि कुटिलेषु न नीतिः' इति भावः॥३०॥

अन्वयः—ये; मायाविषु, मायिनः; न। भवन्ति, ते, मूढधियः, पराभवं, व्रजन्ति। शठाः; तथाविधान्, असंवृताङ्गान्; निशिता, इषवः इव, प्रविश्य, घ्नन्ति॥ ३० ॥

सुधा—ये = केचन, जना इति शेषः। मायाविषु = कपटिषु, मायिनः=कपटिनः, न भवन्ति, ते = अमायिनः, मूढधियः = मन्दबुद्धयः, पराभवम् = अन्याक्रमणम्, व्रजन्ति = यान्ति। हि = यतः, शठाः = मायिनः, तथाविधान् = तादृशान्, असंवृताङ्गान् = कवचादिनाऽरक्षितदेहान्, निशिताः = तीक्ष्णीकृताः, इषवः = बाणाः, इव, प्रविश्य = अन्तः प्रविश्य, घ्नन्ति = मारयन्ति। अतो भवद्भिरीदृशैः सरलैर्न भाव्यमिति भावः॥ ३० ॥

समासः—मूढा धीर्येषां ते मूढधियः। न संवृतानि असंवृतानि; असंवृतान्यङ्गानि येषां ते असंवृताङ्गास्तान् असंवृताङ्गान्॥ ३० ॥

व्याकरणम्—भवन्ति = भू + लट्। व्रजन्ति=व्रज् + लट्। प्रविश्य=प्र + विश् + क्त्वा + ल्यप्। घ्नन्ति = हन् = लट्॥ ३० ॥

वाच्यान्तरम्—यः मायाविषु मायिभिर्न भूयते, तैर्मूढधीभिः पराभवो व्रज्यते। शठैः प्रविश्य निशितैरिषुभिरिव तथाविधा, असंवृताङ्गा जना हन्यन्ते॥ ३० ॥

कोषः—'पराभवः परिभवः पराजयः' इति कोषः। 'निकृतस्त्वनृजुः शठ' इत्यमरः।

कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः' इत्यमरः। 'अथ निशितक्ष्णुतशातानि तेजिते' इत्यमरः ॥ ३० ॥

सारार्थः—ये जनाः कपटयुक्तेष्वपि कपटं न कुर्वन्ति, प्रत्युत सारल्यमेव प्रकाशयन्ति, ते नियतं त्वरितमेव विनश्यन्ति; यथा अनावृतशरीरा वीराः कपटयुद्धकरैर्वीरैस्तीक्ष्णबाणैर्हन्यन्ते तथैवेति। अतो मायाविषु मायिभिर्भवितव्यम्। अन्यथा प्राणपातशङ्का भवति। अत एव भगवद्वाक्यम्—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्'। 'शठे शाठ्यं समाचरेत्' इति नीतिरपि तन्मतमनुसरति ॥ ३० ॥

भाषाऽर्थः—जो कोई ठग (धूर्त-बदमाश) के प्रति धूर्त नहीं बनता, वह भारी दुःख को भोगता है। इसलिये कि शैतान लोग वैसे ही सीधे आदमी के सब बाहर भीतर का हाल समझ कर औपट करते हैं, जैसे चोखे बाण नंगे बदन वाले योद्धा के भीतर घुस कर मारते हैं ॥ ३० ॥

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः, किन्तु स्वोपेक्षादोषमूलत्वादित्याशयेनाह—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

गुणेति। अनुरक्तसाधनोऽनुकूलसहायवान्। उक्तं च कामन्दकीये—'उद्योगादनिवृत्तस्य ससहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी ॥' इति। कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च त्वदन्यस्त्वत्तोऽन्यः। 'अन्यारात्—'इत्यादिना पञ्चमी। क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्यादिभिश्चानुरक्तामनुरागिणीं कुलजां कुलक्रमादागतो कुलीनां च मनोरमां श्रियमात्मवधूमिव स्वभार्यामिव 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः। परैः शत्रुभिरन्यैश्चापहारयेत्। स्वयमेवापहारं कारयेदित्यर्थः। कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः ॥ ३१ ॥

अन्वयः—अनुरक्तसाधनः, कुलाभिमानी, नराधिपः, त्वदन्यः, कः, इव, गुणानुरक्तां, कुलजां, मनोरमाम्, आत्मवधूम्, इव, श्रियम्, परैः, अपहारयेत् ॥ ३१ ॥

सुधा—अनुरक्तसाधनः=अनुकूलसहायकः, कुलाभिमानी = निजवंशमर्यादारक्षणशीलः, नराधिपः = नरपतिः, राजा इत्यर्थः। त्वदन्यः = त्वत्तोऽन्यः, कः इव, (भवेत) यः, 'गुणानुरक्ताम्=गुणैः सन्ध्यादिभिरनुरागवतीम्, वा गुणैः=सौन्दर्यादिभिरनुरागिणीम्, कुलजाम् = वंशक्रमागताम्, वा कुलीनां. श्रियम् = लक्ष्मीम्, वा गृहलक्ष्मीं = गृहिणीं, मादृशीमिति शेषः। मनोरमाम्=मनोऽनुकूलाम्, आत्मवधूम्=स्वस्त्रियम्, इव, अपहारयेत्=त्याजयेत्। अत्र त्वमिवान्यः कः, न कोऽप्यन्योऽस्ति, भवानेवेदृश एक इत्यर्थे, 'त्वमन्यः क इवे'ति पाठो युक्तः ॥ ३१ ॥

समासः—गुणैर्दयादाक्षिण्यादिभिर्वा यानसन्ध्यादिभिरनुरक्ता या सा गुणानु-

रक्ता, तां गुणानुरक्ताम्। अनुरक्तं साधनं यस्य सोऽनुरक्तसाधनः। कुलस्याभिमानो विद्यते यस्य सः कुलाभिमानी। कुले जाता इति कुलजा, तां कुलजाम्। नराणामधिपो नराधिपः। मनो रमयतीति मनोरमा, तां मनोरमाम्। आत्मनो वधूरात्मवधूस्तामात्मवधूम् ॥ ३१ ॥

व्याकरणम्—अपहारयेत् = अप + हारि + विधिलिङ् ॥ ३१ ॥

वाच्यान्तरम्—अनुरक्तसाधनेन कुलाभिमानिना नराधिपेन त्वदन्येन केन इव गुणानुरक्ता कुलजा मनोरमा आत्मवधूरिव श्रीः परैरपहार्यत ॥ ३१ ॥

कोषः—'निर्वर्त्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः। 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः ॥ ३१ ॥

सारार्थः—इह जगति न कोऽपि त्वत्तोऽधिको विवेकशून्यो दृश्यते यस्त्वं विचारवानपि, कुलीनां स्नेहवतीं स्त्रियमिव वंशक्रमागतां राजलक्ष्मीं त्यक्तवानसि ॥ ३१ ॥

भाषाऽर्थः—आपके जितने सहायक हैं सब हृदय से प्रेमी हैं और खुद भी बड़े कुल की मर्यादा रखने वाले होकर भी आपके ऐसा दूसरा राजा इस दुनिया में कौन होगा, जो अपने गुणों से अनुरागवती, कुलीना मन मोहने वाली अपनी स्त्री की तरह वंश परम्परा में ठहरी हुई राजलक्ष्मी को त्याग दे। मेरी समझ में ऐसे सीधे सादे एक आप ही नजर आते हैं ॥ ३१ ॥

अथ दशभिः क्रोधोद्दीपनं करोति—

भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥३२॥

भवन्तमिति। हे नरदेव नरेन्द्र! एतर्हीदानीम्, अस्मिन्नापत्कालेऽपीत्यर्थः। "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः। 'इदमो र्हिल्' इति र्हिल्प्रत्ययः। 'एतेतौ रथोः' इत्येतादेशः। आपदमेवाह—मनस्विगर्हिते शूरजनजुगुप्सिते वर्त्मनि मार्गे विवर्तमानम्, शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः। भवन्तं त्वामुदीरित उद्दीपितो मन्युः क्रोधः। शुष्कं नीरसम्। 'शुषः कः' इति निष्ठातकारस्य ककारः। शमी चासौ तरुश्चेति विशेषणसमासः। तम्। शमीग्रहणं शीघ्रज्वलनस्वभावात्कृतम्। उच्छिख उद्गतज्वालः। 'घृणिज्वाले अपि शिखे' इत्यमरः। वह्निरिव। कथं न ज्वलयति। ज्वलयितुमुचितमित्यर्थः। 'मितां ह्रस्वः' इति ह्रस्वः ॥ ९२ ॥

अन्वयः—हे नरदेव! एतर्हि, मनस्विगर्हिते, वर्त्मनि, विवर्त्तमानं, भवन्तम्, उदीरितः, मन्युः, उच्छिखः, अग्निः, शुष्कं, शमीतरुम्, इव, कथं, न, ज्वलयति ॥३२॥

सुधा—हे नरदेव! = मानवेन्द्र!, एतर्हि = अधुना, मनस्विगर्हिते = मानिजन-

निन्दिते, वर्त्मनि=मार्गे, विवर्त्तमानम्,=संस्थितम्, भवन्तम्=युधिष्ठिरम्, उदीरितः=उत्तुतः, सञ्जनित इति भावः। मन्युः=क्रोधः, शत्रुवपमानजातामर्ष इति भावः। उच्छिखः=उज्ज्वलः, अग्निः=वैश्वानरः, शुष्कम्=अनार्द्रम्, नीरसमिति यावत्। शमीतरुम्=शमीसंज्ञकवृक्षेन्धनम्, कथं=कस्मात्, न ज्वलयति=न दहति। अर्थादवश्यमेव भवतां कोपः प्रज्वलयितुं योग्य इति। अमर्षोद्गमसम्भवे तद्‌सम्भवादाश्चर्यमेतद् वृत्तम् ॥ ३२ ॥

समासः—मनस्विभिर्गर्हितं मनस्विगर्हितं तस्मिन् मनस्विगर्हिते। नराणां देवो नरदेवस्तत्सम्बोधने हे नरदेव !। शम्यास्तरुः तं शमीतरुम्। उद्गता शिखा यस्य स उच्छिखः ॥ ३२ ॥

व्याकरणम्—उदीरितः=उत्+ईर्+क्तः। ज्वलयति=ज्वल+लट् ॥ ३२ ॥

वाच्यान्तरम्—हे नरदेव ! एतर्हि मनस्विगर्हिते वर्त्मनि विवर्त्तमानो भवान् उदीरितेन मन्युना, उच्छिखेन अग्निना शुष्कः शमीतरुरिव कथं न ज्वल्यते ॥३२॥

कोषः—'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः। 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः' इत्यमरः ॥ ३२ ॥

सारार्थः—यथाऽग्निः शुष्कशमीकाष्ठं प्राप्योच्छिखो भूत्वा तं भस्मसात्करोति। तथैव भवान् वीरजनविनिन्दिते मार्गे वर्त्तमानः शत्रुकृतमपमानं सहमानः, कथं न कोपेन शत्रुं दहति। नैतत्समुचितमिति ॥ ३२ ॥

भाषाऽर्थः—इस समय वीरों के घृणित रास्ते में ठहरे हुए आपको एकाएक निकला हुआ क्रोध क्यों नहीं उत्तेजित ( उद्दीपित ) करता, जैसे सूखे शमीवृक्ष की लकड़ी को प्रज्वलित आग जला डालती है ॥ ३२ ॥

नन्वन्तःशत्रुत्वादयं क्रोधस्त्याज्य एवेत्याशङ्क्याह—

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥३३॥

अवन्ध्येति। अवन्ध्यः कोपो यस्य तस्यावन्ध्यकोपस्यात एवापदां विहन्तुः, निग्रहानुग्रहसमर्थस्येत्यर्थः। पुंस इति शेषः। देहिनो जन्तवः स्वयमेव वश्या वशङ्गता भवन्ति। 'वशं गतः' इति यत्प्रत्ययः। अतस्त्वया कोपिना भवितव्यमित्यर्थः। व्यतिरेके त्वनिष्टमाचष्टे—अमर्षशून्येन निःकोपेन जन्तुना। अन्यथा शोक इतिवत् हेतौ' इति तृतीया। हृदयस्य कर्म हार्दं स्नेहः। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः। युवादित्वादण्। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। जातहार्देन जातस्नेहेन सता जनस्यादरो न। विद्विषा द्विषता च सता दरो न। अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्याविस्यर्थः। अथवा विद्विषा

सता दरो भयञ्च । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । एतस्मिन्नेव प्रयोगे सन्धिवशात् द्विधा पदच्छेदः । पुंवाक्येषु न दोषः । अतः स्थाने कोपः कार्यः; त्याज्यस्त्वस्थाने कोप इति भावः ॥ ३३ ॥

अन्वयः—अवन्ध्यकोपस्य, आपदां, विहन्तुः देहिनः, स्वयम्, एव, वश्याः, भवन्ति, अमर्षशून्येन, जन्तुना, जातहार्देन, (सता) जनस्य, आदरः, न (भवति) वा, विद्विषा, ( सता ) दरः, न ( भवति ) ॥ ३३ ॥

सुधा—अवन्ध्यकोपस्य = अमोघामर्षस्य, सफलक्रोधस्येति भावः । आपदाम् = विपदाम्, विहन्तुः = संहारकस्य, जनस्येति शेषः । देहिनः = प्राणिनः, स्वयमेव = आत्मनैव, वश्याः = अधीनाः, भवन्ति = जायन्ते, अथ च, अमर्षशून्येन = क्रोधहीनेन, जन्तुना = जनेन, जातहार्देन = प्राप्तप्रेम्णाऽपि, सता, आदरः = सम्मानः, न हि (भवति) । तथा च तादृशेन जनेन, विद्विषा=विरोधिनाऽपि सम, दरः = भयं, न ( भवति ) । अर्थात् दुर्योधनस्तु क्रोधावसरे च हर्षं करोति, तेन तस्यावशा अपि वशीभूताः । भवान् वैराग्यं भजन् वने वसन्मुनिरिव क्रोधामर्षविहीनोऽस्ति, कदाचिच्चेत्क्रोधोऽपि जायते, तदा क्षणमेव स विलीनो भवति, क्रोधहेतुमति क्रोधफलं न पातयति, शान्तचित्तत्वात् , अतो ये दुर्योधनादयः पूर्वं वशेऽतिष्ठन् , तेऽपि स्वतन्त्राः प्रत्युत भवन्तं वशिनमेव वशं कुर्वन्तीति नोचितम्, क्षत्रियकुलेऽवतीर्य, स्वकुलोचितां प्रकृतिं भजन्नेव जनो राजते ॥ ३३ ॥

समासः—न वन्ध्योऽवन्ध्यः, अवन्ध्यः कोपो यस्य तस्य अवन्ध्यकोपस्य । देहोऽस्तीति देही तस्य देहिनः । अमर्षेण शून्योऽमर्षशून्यस्तेन अमर्षशून्येन । जातं हार्दं येन सः जातहार्दस्तेन जातहार्देन ॥ ३३ ॥

व्याकरणम्—भवन्ति = भू + लट् । आदरः = आ + दृ + अप् ॥ ३३ ॥

वाच्यान्तरम्—अवन्ध्यकोपस्य, आपदां विहन्तुः, स्वयमेव देहिभिर्वश्यैर्भूयते । अमर्षशून्येन जन्तुना जातहार्देन सताऽऽदरेण न भूयते, न च दरेण भूयते ॥ ३३ ॥

कोषः—'प्रेमा ना प्रियता हार्दं प्रेम' इति । 'दरोऽस्त्रियां भये श्वभ्रे' इति चामरः ॥ ३३ ॥

सारार्थः—यस्य क्रोधोद्गमोचितसमये क्रोधी भवति, तथा च तस्य यथोचितं फलमपि दिशति, तस्य सर्वे वश्या भवन्ति । यस्य च क्रोधो विफलस्तस्मात्कस्यापि भयं न, न च कोऽपि लाभो भवति कस्यचित् । अतो भवानपि मद्गुरुत्रापकर्षणामर्षं सफलं करोतु । येन स्वतो भीताः शत्रवो गमिष्यन्ति पराभवमिति ॥ ३३ ॥

भाषाऽर्थः—जिसका क्रोध व्यर्थ नहीं जाता अर्थात् जिसके ऊपर क्रोध करता है उसको अवश्य दण्ड देता है, ऐसे आदमी के सब स्वयं (आप ही आप) अधीन हो जाते हैं । और जिसको क्रोध के स्थान में भी क्रोध नहीं होता, उस आदमी को न शत्रु से डर और न मित्र से आदर ही मिलता है ॥ ३३ ॥

परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥ ३४ ॥

परिभ्रमन्निति । लोहितचन्दनोचितः उचितलोहितचन्दनः । 'वाहिताग्न्यादिषु' इति साधुः । अभ्यस्तरक्तचन्दन इत्यर्थः । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । महारथो रथचारी । उभयत्रापि प्रागिति शेषः । अद्य तु रेणुरूषितो धूलिच्छुरितः । पादाभ्यामतति गच्छतीति पदातिः पादचारी । 'अज्यतिभ्यां च' इत्यनुवृत्तौ 'पादे च' इत्यौणादिक इन्प्रत्ययः । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । अन्तर्गिरि गिरिष्वन्तः विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति विकल्पात्समासान्ताभावः । परिभ्रमन्नयं वृकोदरो भीमः । सत्यधनस्येति सोल्लुण्ठनवचनम् । अद्यापि सत्यमेव रक्षयते, न तु भ्रातर इति भावः । तवेति शेषः । मानसं नो दुनोति कच्चिन्न परितापयति । 'कच्चित्कामप्रवेदने' इत्यमरः । स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४ ॥

अन्वयः—लोहितचन्दनोचितः, महारथः, अयं, वृकोदरः, रेणुरूषितः, पदातिः, (सन्) अन्तर्गिरि, परिभ्रमन्, सत्यधनस्य (तव), मानसं, कच्चित्, नो, दुनोति ॥

सुधा—लोहितचन्दनोचितः = रक्तचन्दनचर्चितः, महारथः = अतिरथः, यः प्रागासीदिति शेषः । सोऽधुना, अयं=पुरःस्थः, वृकोदरः = कोकजठरः, भीम इत्यर्थः । रेणुरूषितः = धूलिधूसरितः, पदातिः = चरणचारी, अन्तर्गिरि = पर्वतगुहान्तरे परिभ्रमन् = पर्यटन् ; सत्यधतस्य = सर्वसत्यात्मकस्य तवेत्यर्थः । मानसम् = मनः, कच्चित्=किम्, नो=नहि, दुनोति=परितापयति, अवश्यमयं परितापयोग्यो विषयः । तथाऽपि ते चित्तं निश्चिन्तमिव लक्ष्यते, अतो भवन्मनः कठोरतममिति ॥ ३४ ॥

समासः—लोहितञ्च चन्दनं लोहितचन्दनम्, तेनोचित इति लोहितचन्दनोचितः । पादाभ्यामततीति पदातिः । रेणुभिः रूषितः रेणुरूषितः । गिरिषु अन्तः इत्यन्तर्गिरि । महान् रथो यस्य स महारथः । वृकस्योदरमिवोदरं विद्यते यस्य सः वृकोदरः । सत्यमेव धनं यस्य सः सत्यधनस्तस्य सत्यधनस्य ॥ ३४ ॥

व्याकरणम्—परिभ्रमन् = परि + भ्रमु + लट् + शतृ । दुनोति=टुदु + लट् ॥३४॥

वाच्यान्तरम्—लोहितचन्दनोचितेन महारथेन, पदातिना रेणुरूषितेन अन्तर्गिरि परिभ्रमता अनेन वृकोदरेण सत्यधनस्य तव मानसं कच्चित् नो दूयते ॥ ३४ ॥

कोषः—'लोहितो रोहितो रक्तः' इत्यमरः । 'पादातिकपदाजिपदगपदातिकपदातयः' इत्यमरः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इत्यमरः । 'गुण्ठितरूषिते' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । 'वानरस्त्रीवालिमृगाः कोकस्त्वीहामृगो वृकः' इत्यमरः । 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः ॥ ३४ ॥

सारार्थः—यो भीमसेनो राजकुमारः पूर्वं नित्यं रक्तचन्दनचर्चिताङ्गो रथचारी आसीत्, स चाधुना धूलिधूसरिताङ्गः पर्वतोपरि पादचारी भवन् भ्रमति तं तथारूपं विलोक्य भवतो मनसि किं खेदो न जायते। अहह महतः कष्टस्यावसरोऽयम् ॥३४॥

भावार्थः—जो राजकुमार भीमसेन पहले लाल चन्दन शरीर में लगाते थे, उसी शरीर में अब धूलि लगती है। जो पहले रथ पर चलते थे, वे अब पर्वत पर पैदल घूमते हैं, हाय! ऐसे सोदर भाई को देखकर भी क्या आपका हृदय दुखता नहीं? ॥ ३४ ॥

विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः।
स वल्कवासांसि तवाधुनाऽऽहरन् करोति मन्युं न कथं धनञ्जयः ॥३५॥

विजित्येति। वासव इन्द्र उपमा उपमानं यस्य स वासवोपम इन्द्रतुल्यो यो धनञ्जयः। उत्तरान् कुरून्मेरोरुत्तरान्मानुषान्देशविशेषान्विजित्य प्राज्यं प्रभूतम्, 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः। कुप्यादन्यदकुप्यं हेमरूप्यात्मकम्। 'स्यात्कोशश्च हिरण्यञ्च हेमरूप्ये कृताकृते। ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरः। वसु धनमयच्छद्दत्तवान्। 'पाघ्रा'—इत्यादिना दाणो यच्छादेशः। स धनं जयतीति धनञ्जयोऽर्जुनः 'संज्ञायां भृतॄवृजि'—इत्यादिना खच्प्रत्ययः। 'अरुर्द्विषत्'–इत्यादिना मुमागमः। अधुनाऽस्मिन् काले। 'अधुना' इति निपातनात्साधुः। तव वल्कवासांस्याहरन् कथं मन्युं क्रोधं दुःखं वा न करोति ॥ ३५ ॥

अन्वयः—वासवोपमः, यः, ( अर्जुन ) उत्तरान्, कुरून्, विजित्य, प्राज्यम्, अकुप्यं, वसु, अयच्छत्। सः धनञ्जयः, अधुना, वल्कवासांसि, आहरन्, तव, मन्युं, कथं, न, करोति ॥ ३५ ॥

सुधा—वासवोपमः = इन्द्रोपमः, इन्द्रसम इति भावः। इन्द्रपुत्रत्वात्पितृसदृशत्वमुचितमेवेति। उत्तरान् = सिद्धपुरान्तिकवर्त्तिनः, कुरून् = एतदाख्यदेशान्; विजित्य = स्वायत्तीकृत्य; प्राज्यम्=प्रचुरम्, बहुलमित्यर्थः। अकुप्यम्,=कुप्यभिन्नम्, वसु = धनम्, (भवते) अयच्छत् = दत्तवान्, सः = उत्तरकुरुविजयी, धनञ्जयः = अर्जुनः, मध्यमपाण्डव इत्यर्थः। अधुना = साम्प्रतम्, वल्कवासांसि = तरुत्वग्वस्त्राणि, आहरन् = गृह्णन्, परिदधद् इत्यर्थः। सन्, तव = युधिष्ठिरस्य, सर्वभ्रातृसुखदुःखानुभवशीलस्येत्यर्थः। मन्युम् = क्रोधम्, वा दुःखं, कथम् = कस्मात, न करोति = नोत्पादयति, स्वपालनीयानुजक्लेशमवलोक्य कस्मान्न शत्रौ दुःखदातरि क्रोध उत्पद्यते इति महदाश्चर्यकरम् ॥ ३५ ॥

समासः—वासवः उपमा यस्य स वासवोपमः। वल्कान्येव वासांसि वल्कवासांसि। न कुप्यम् अकुप्यम् ॥ ३५ ॥

व्याकरणम्—विजित्य = वि + जि + क्त्वा + ल्यप् । अयच्छत् = यम् + लङ् । आहरन् = आ + हृ + शतृ । करोति = कृ + लट् ॥ ३५ ॥

वाच्यान्तरम्—वासवोपमेन येन उत्तरान् कुरून् विजित्य प्राज्यमकुप्यं वसु अयच्छत तेन धनञ्जयेन अधुना वल्कवासांसि आहरता तव मन्युः कथं न क्रियते ॥ ३५ ॥

कोषः—'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरः । 'त्वक् स्त्री वल्कं वल्कलमस्त्रियाम्' इत्यमरः ॥ ३५ ॥

साराऽर्थः—योऽर्जुनः कुरुदेशं जित्वाऽपरिमितं धनं भवते दत्तवान्, तमधुना खर्जूर सर्ज-भूर्ज-प्रभृति-तरुत्वचां वस्त्रं वसानं विलोक्य भवतो मनः कथं न खेदान्वितं जायते, अहह करणे धन्योऽसि त महोपकारकर्त्तर्यपि जने भवतः प्रतीकारकरणे मतिर्न प्रवर्त्तत इति ॥ ३५ ॥

भाषाऽर्थः—इन्द्र के समान जिन्होंने उत्तर कुरु देशों को जीतकर आपको अतुल धन दिया था, अब उन अर्जुन को वल्कल पहिने देख आपको क्रोध क्यों नहीं होता ? ॥ ३५ ॥

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥ ३६ ॥

वनान्तेति—वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । 'आकारो देह आकृतिः' इति वैजयन्ती । विष्वक्समन्तात् । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । कचाचितौ कचव्याप्तौ । 'विशीर्णकेशावि'त्यर्थः । अत एवागजौ गिरिसम्भवौ गजाविव स्थितावेतौ यमौ युग्मजातौ । माद्रीपुत्रावित्यर्थः । 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च' इति विश्वः । 'विलोकयंस्त्वं कथं धृतिसंयमौ । सन्तोषनियमौ । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः । बाधितुं नोत्सहसे न प्रवर्तसे । 'शकधृष-' इत्यादिना तुमुन् । अहो ते महद्धैर्यमिति भावः ॥ ३६ ॥

अन्वयः—वनान्तशय्याकठिनीकृताकृती, विष्वक्, कचाचितौ अगजौ, गजौ, इव, यमौ, विलोकयन्, त्वं, कथं, धृतिसंयमौ, बाधितुं, न उत्सहसे ॥ ३६ ॥

सुधा—वनान्तशय्याकठिनीकृताकृती=विपिनमध्यभूशयनकठोरशरीरौ, विष्वक् = परितः, सर्वतः इत्यर्थः । कचाचितौ = केशव्याप्तौ, अगजौ = पर्वतीयौ, गजौ = हस्तिनौ, इव, एतौ = इमौ, पुरःस्थावित्यर्थः । यमौ = यमलौ, सहयातावित्यर्थः । विलोकयन् = पश्यन्, त्वं = युधिष्ठिरः, कथम् = कस्मात् कारणात्, धृतिसंयमौ = धैर्यनियमौ, बाधितुं = निरोद्धुम् ; न उत्सहसे = न प्रवर्त्तसे ॥ ३६ ॥

समासः—न कठिना अकठिना, अकठिना कठिना सम्पद्यमाना इति कठिनीकृता, वनान्त एव शय्या वनान्तशय्या, तया कठिनीकृता आकृतिर्ययोस्तौ वनान्तशय्याकठिनीकृताकृती । कचैः आचितौ कचाचितौ । अगे जातावगजौ धृतिश्च संयमश्च धृतिसंयमौ, तौ ॥ ३६ ॥

व्याकरणम्—विलोकयन्=वि+लोक+णिच्+लट्+शतृ । बाधितुम्=बाध+तुमुन् । उत्सहसे=उत्+सह+लट् ॥ ३६ ॥

वाच्यान्तरम्—वनान्तशय्याकठिनीकृताकृती विष्वक् कचाचितौ अगजौ गजौ इव एतौ यमौ विलोकयता त्वया कथं धृतिसंयमौ बाधितुं न उत्सह्यते ॥ ३६ ॥

कोषः—'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । 'शय्यायां शयनीयवत् । शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः । 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च' इत्यमरः । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति [illegible] ॥ ३६ ॥

भावार्थः—कुन्तीसुकुमारौ नकुलसहदेवौ भूमिशयनात्कर्कशशरीरौ विलोक्य [illegible] त्वं धैर्यान्न विचलितोऽसि, नैतादृशधैर्यस्याधुनाऽऽवश्यकता । सर्वे ते [illegible] केवलं तव दुर्मतिग्राह्या गृहीता विपदि पतिता अनिर्वचनीयं क्लेशमनुभवन्ति ॥ ३६ ॥

भाषार्थः—जङ्गल में विना बिछौने के सोने से कड़ा हो गया है शरीर जिनका और पड़े हुए केशों से चारों तरफ ढँके हुए बनैले हाथियों के जैसे इन दोनों यमल (नकुल, सहदेव) को देखते हुए अब तक भी आप धैर्य नहीं छोड़ते ॥ ३६ ॥

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः ॥३७॥

[illegible] । इमां वर्तमानाम् । नवेमां तावकीं त्वदीयाम् । 'तस्येदम्' इत्यणप्र[illegible] 'तवकममकावेकवचने' इति तवकादेशः । धियं त्वदापद्विषयां चित्तवृत्तिमहं [illegible] स्वान्तशान्तेनापन्नत्वाद् दुःखितमनुमातुं शक्यते । धीरादिष्वनै[illegible]—चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेकप्रकारः खलु । [illegible] भवदापदं विचिन्तयन्त्या भावयन्त्या मम चेतश्चित्तम् । आधयो [illegible] 'उपसर्गे घोः किः' इति किप्रत्ययः । प्रसभं प्रसह्य रुजन्ति भञ्जन्ति [illegible] । परस्यानामपि दुःसहा दुःखजननी त्वद्विपत्तिरनुभवि[illegible] मद्चित्रमित्यर्थः । चेत इति । रुजार्थानां भाववचना-

ज्वरेः' इति षष्ठी न भवति । तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति ॥३७॥

अन्वयः—अहम्, इमाम्, तावकीं, धियं, न वेद । चित्तवृत्तयः, विचित्ररूपाः, ; । परां, भवदापदं, विचिन्तयन्त्याः, मम; आधयः, प्रसभं, चेतः रुजन्ति ॥३७॥

सुधा—अहम्=द्रौपदी, इमाम्=ईदृशीम्, तावकीम्=त्वदीयाम्, धियम्=बुद्धिम्, द्=न जानामि; चित्तवृत्तयः=मनोव्यापाराः, विचित्ररूपाः=भिन्नभिन्नप्रकाराः, ; = किल भवन्तीति शेषः । पराम् = अत्यधिकाम्, भवदापदम् = भवद्विपत्तिम्; तामधोदशां दुर्दशामित्यर्थः । विचिन्तयन्त्याः = विचारयन्त्याः; मम = द्रौपद्याः, धयः = मनोव्यथाः, प्रसभं = बलात्कारेण, सहसेत्यर्थः । चेतः = चित्तम्, रुजन्ति= शन्ति, इति भवतां दुर्दशामनुभवन्ती अहमपि दुःखेन परिभूये, भवांस्तु निर्वि- र इव वर्तते इति सहृदयत्वं न सूचयति ॥ ३७ ॥

समासः—विचित्रं रूपं यस्यास्तां विचित्ररूपाम् । चित्तस्य वृत्तयश्चित्तवृत्तयः । तामापद् भवदापद् तां भवदापदम् ॥ ३७ ॥



व्याकरणम्—वेद = विद् + लट् । रुजन्ति = रुज् + लट् ॥ ३७ ॥

वाच्यान्तरम्—मया इयं तावकी धीर्न विद्यते ( न ज्ञायते ) । चित्तवृत्तिभिर्वि- चित्ररूपाभिः ( भूयते ) । परां भवदापदं विचिन्तयन्त्या मम आधिभिश्चेतः प्रसभं ज्यते ॥ ३७ ॥

कोषः—'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतीः' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । विपत्त्यां विपदापदौ' इत्यमरः ॥ ३७ ॥

सारार्थः—अहह ! सुखदुःखभेदविचारशून्या ईदृशी मतिस्तव कया दैव- दुर्दशया समजनि, तन्मया न ज्ञातुं पार्यते क उपाय एवं स्याद्येन भवान् प्रकृतिस्था भविष्यति । किमधिकम्, भवदीयां दुर्दशामनुभूय ममापि मनो दुर्दशामग्नमिव प्रतिभाति ॥ ३७ ॥

भाषाऽर्थः—हाय ! आपकी इस दुर्मति को मैं नहीं समझ सकती, आदमियों की चित्तवृत्ति भी भिन्न-भिन्न होती है । आपकी इस विपत्ति को सोचते हुए मेरे चित्त को मनोव्यथा दुखाती है । किन्तु आपको तो जरा भी मालूम हो नहीं होता ॥ ३७ ॥

तदापदमेव श्लोकत्रयेणाह—

पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥३८॥

पुरेति । यस्त्वं महाधनं बहुमूल्यं श्रेष्ठम् । 'महाधनं महामूल्ये' इति विश्वः । शयनं शय्यामधिरूढः सन् । स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः

पुरा विबोध्यसे वैतालिकैरिति शेषः । पूर्वं बोधितः इत्यर्थः । 'पुरि लुङ् चास्मे' इति भूतार्थे लट् । स त्वमदभ्रदर्भां बहुकुशाम् । 'अस्त्री कुशं कुथो दर्भः' इति । 'अदभ्रं बहुलं बहु' इति चामरः । स्थलीमकृत्रिमभूमिम् । 'जानपद' इत्यादिना कृत्रिमार्थे ङीप् । एतेन दुःसहस्पर्शत्वमुक्तम् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । अधिशय्य शयित्वा । 'अयङ् यि क्ङिति' इत्ययङादेशः । अशिवैरमङ्गलैः शिवारुतैः क्रोष्टुवासितैः 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्युभे' इति वैजयन्ती निद्रां जहासि । अद्येति शेषः ॥ ३८ ॥

अन्वयः—पुरा, यः, ( त्वं ) महाधनं, शयनम्, अधिरूढः, ( सन् ) स्तुतिगीतिमङ्गलैः विबोध्यसे । सः, त्वम्, अभ्रदर्भां, स्थलीम्, अधिशय्य, अशिवैः, शिवारुतैः निद्रां जहासि ॥ ३८ ॥

पुरा=पूर्वस्मिन् समये, राज्यारोहणावसरे इत्यर्थः । यः=महाराजो भवन्, त्वम्=युधिष्ठिरः, महाधनम्=बहुमूल्यं, शयनम्=पर्यङ्कम्, अधिरूढः=आरूढः, शयितः सन्नित्यर्थः । स्तुतिगीतिमङ्गलैः=स्तोत्रगानादिमङ्गलैः, शब्दैर्वाद्यैरिति शेषः । विबोध्यसे=विनिद्रो भाव्यसे, वैतालिकैरिति शेषः । स एवाधुना, त्वं=वनचरो भूत्वा, अदभ्रदर्भाम्=बहुकुशाम्, कुशकण्टकव्याप्तामित्यर्थः । स्थलीम्=प्राकृतभूमिम्, अपरिष्कृतामित्यर्थः । अधिशय्य=शयित्वा, निद्रितो भूत्वा इत्यर्थः । अशिवः=अमङ्गलैः, शिवारुतैः=शृगालीरवैः, शिवाया आर्त्तनादैरित्यर्थः । निद्राम्=शयनम्, जहासि ॥ ३८ ॥

समासः—स्तुतिश्च गीतिश्च मङ्गलञ्च स्तुतिगीतिमङ्गलानि तैः स्तुतिगीतिमङ्गलैः । अदभ्रो दर्भो यस्यां सा अदभ्रदर्भा तामदभ्रदर्भाम् । शिवाया रुतानि शिवारुतानि तैः शिवारुतैः ॥ ३८ ॥

व्याकरणम्—अधिरूढः=अधि+रुह=क्तः । विबोध्यसे=वि+बुध्+यक्+लट् । अधिशय्य=अधि+शीङ्+क्त्वा+ल्यप् । जहासि=हा+लट् ॥ ३८ ॥

वाच्यान्तरम्—पुरा महाधनं शयनमधिरूढं यं त्वां स्तुतिगीतिमङ्गलैः विबोधयन्ति, तेनैवाधुना अदभ्रदर्भां स्थलीमधिरुह्य अशिवैः शिवारुतैर्निद्रा हीयते ॥३८॥

कोषः—'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समा' इत्यमरः । 'अदभ्रं बहुलं बहु' इत्यमरः । 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्युभे' इति वैजयन्ती । स्यान्निद्रा-शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः' इत्यमरः ॥ ३८ ॥

भावार्थः—भद्र ! पुरा यस्त्वं बहुमूल्यपर्यङ्के शयितः सन् उषस्युपस्थिते बन्दिमागधविहितस्तुतिगीतवन्दनैर्निद्रात्यागं कृतवान्; स एवाधुना कुशकाशाङ्कुरकण्टकप्रभृतिपदार्थदुर्गभूमौ विनाऽऽस्तरणं शयितः सन् शृगालस्वार्त्तनादैः शयनं मुञ्च-

सीति दशाव्यत्यासं नानुभवसि किम् ? भ्रातॄणां क्लेशस्तु दूरे तावत्स्वदुःखमपि नानुभवितुमधुना शक्नोषि ॥ ३८ ॥

भाषाऽर्थः—पहले ( जब कि महाराज सिंहासन पर थे ) आप कीमती बिछौने से सजे हुए पलंग पर सोते थे और प्रातःकाल में बन्दी-भाट-मागध आदि जनों के स्तोत्रपाठ—गीत गान, सुस्वर बाजे आदि मंगल शब्दों से जगते थे। वही आप अब कुश, काश तथा कण्टकों से छाई हुई जमीन में सोए हुए, सियारों के अमङ्गल शब्दों से नींद को तजते हैं। हा ! कितना अन्तर हो गया, क्या आप इस हालत को समझते नहीं हैं ? ॥ ३८ ॥

पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥ ३९ ॥

पुरेति । हे नृप, यदेतत्पुरोवर्त्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेनान्धसाऽन्नेन । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । रमणीयस्य भावो रामणीयकं मनोहरत्वमुपनीतं प्रापितम् । नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । अद्य वन्यफलाशिनस्ते तव तद्वपुर्यशसा समं परमतिमात्रं कार्श्यं परैति प्राप्नोति । उभयमपि क्षीयत इत्यर्थः । अत्र सहोक्तिरलङ्कारः तदुक्तं काव्यप्रकाशे—'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति ॥ ३९ ॥

अन्वयः—हे नृप ! पुरा, यत् , एतत् , ( वपुः ) द्विजातिशेषेण, अन्धसा, रामणीयकम्, उपनीतम्, तत् , अद्य वन्यफलाशिनः, ते, वपुः; यशसा, समं, परम्, कार्श्यम्, परैति ॥ ३९ ॥

सुधा—हे नृप = राजन् ! पुरा = पूर्वम्, सिंहासनारूढदशायामित्यर्थः । यत् , एतत् = पुरोवर्त्तमानम् , वपुरिति शेषः । द्विजातिशेषेण = ब्राह्मणभोजनावशेषेण; अन्धसा = अन्नेन, रामायणीयकम् = दर्शनीयताम् , उपनीतम् = प्रापितम् , तत् , अद्य = वनवासममये, वन्यफलाशिनः = विपिनजातफलमूलभोजिनः, ते = तव, भवतो युधिष्ठिरस्येत्यर्थः । वपु = शरीरम्, यशसा = कीर्त्या, समम् = सह, परम् = अत्यधिकम्, कार्श्यम् = खिन्नत्वम्, परैति = प्राप्नोति ॥ ३९ ॥

समासः—'द्वाभ्यां ( जन्मसंस्काराभ्यां ) जायन्ते इति द्विजातयः' तेभ्यः शेषमिति द्विजातिशेष, तेन द्विजातिशेषेण । रमणीयस्य भावो रामणीयकम् । वने भवानि वन्यानि, वन्यानि फलानि वन्यफलानि, तानि अश्नाति इति वन्यफलाशी, तस्य वन्यफलाशिनः ॥ ३९ ॥

व्याकरणम्—उपनीतम् = उप + नी + क्तः । परैति = परा + इण् + लट् ॥ ३९ ॥

वाच्यान्तरम्—हे नृप ! पुरा यद् एतद् (वपुः) द्विजातिशेषेण अन्धसा गा यकमुपनीतवत्, तेन वन्यफलाशिनस्ते वपुषा यशसा समं परं कार्श्यं परेयते ॥३

कोषः—'स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा' इत्यमरः । 'नृपो भूपं वनीशश्च नृपतिर्भूपतिर्मतः' इति कोषः । 'दण्डविप्राण्डजा द्विजाः' इत्यमरः । 'य कीर्त्तिः समज्ञा च' इत्यमरः । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिवः' इत्यमरः ॥ ३९ ॥

सारार्थः—पूर्वस्मिन् समये यस्त्वं ब्राह्मणगणान् सादरं नवनवव्यञ्जनसामग्रि भिर्भोजयित्वाऽवशेषेण स्वयं भोजनं विधाय शरीरं पोषितवान्, स एवाधुना व वनुजकन्दमूलफलानि भुञ्जानः, यथा यशः स्वल्पं कृतवान्, तथैव शरीरमपि क्षीण कृतवानसि ॥ ३९ ॥

भाषाऽर्थः—हे राजन् ! पहले जो आप ब्राह्मण तथा अभ्यागतों को खिलाकर बाकी अन्न से अपनी देह को पाल-पोस कर सुन्दर बनाये रहते थे वही आपने आजकल जंगल के फल कन्द-मूल भक्षण करके उस मनोहर देह को दुर्बल बना लिया और उसके साथ ही यश को कम कर चुके हैं ॥ ३९ ॥

अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥ ४० ॥

अनारतमिति । अनारतमजस्रं मणिपीठशायिनौ मणिमयपादपीठस्थायिनौ यौ चरणौ राजशिरःस्रजां नमद्भूपालमौलिस्रजां रजः परागोऽरञ्जयत । तौ ते चरणौ, मृगैर्द्विजैश्च तपस्विभिरालूनशिखेषु छिन्नाग्रेषु बर्हिषां कुशानाम् । 'बर्हिः कुशहुताशयोः' इति विश्वः । वनेषु निषीदतस्तिष्ठतः ॥ ४० ॥

अन्वयः—राजशिरःस्रजां, रजः, अनारतं, मणिपीठशायिनौ, यौ, अरञ्जयत तौ, ते, चरणौ, मृगद्विजालूनशिखेषु, बर्हिषां वनेषु, निषीदतः ॥ ४० ॥

सुधा—राजशिरःस्रजां = प्रणमन्महीपमौलिमाल्यानाम्, रजः = परागः (कर्त्ता), अनारतम्=सततम्, मणिपीठशायिनौ = रत्नमयपादपीठस्थायिनौ, यौ = ( चरणौ ) अरञ्जयत = रञ्जितवत्, तौ = पूर्वशोभितौ, ते = तव, चरणौ = पादौ, मृगद्विजालूनशिखेषु = हरिणविप्रलुञ्चिताग्रेषु, बर्हिषाम् = कुशानाम्, वनेषु = विपिनेषु, निषीदतः = तिष्ठतः ॥ ४० ॥

समासः—मणिभिः खचितं पीठं मणिपीठम्, मणिपीठे शयाते इति मणिपीठशायिनौ । राज्ञां शिरांसि, राजशिरांसि तेषां स्रजो यास्ता राजशिरःस्रजस्तासां राजशिरःस्रजाम् । मृगाश्च द्विजाश्च मृगद्विजास्तैरालूना शिखा येषां ते मृगद्विजालूनशिखास्तेषु मृगद्विजालूनशिखेषु ॥ ४० ॥

व्याकरणम्—अरञ्जयत्=रञ्ज + णिच् + लङ् । निषीदतः=नि + षद् + लट् ॥४०॥

वाक्यान्तरम्—राजशिरःस्रजां रजसा अनारतं यौ मणिपीठशायिनौ, अरण्येषाम्, ते चरणाभ्यां मृगद्विजालूनशिखेषु बर्हिषां वनेषु निषद्यते ॥ ४० ॥

कोषः—'सततानारताश्रान्तसन्ततविरतानिशम्' इत्यमरः। 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः। 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इत्यमरः। 'पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। 'दन्तविप्राण्डजा द्विजाः' इत्यमरः। 'बर्हिः कुशहुताशयोः' इति विश्वः ॥ ४० ॥

सारार्थः—यस्य भवतः पादौ पूर्वं सदैव मणिखचितपादुकास्थायिनौ आसाते, तथा च सततमुपहारदानार्थमागतानां नमन्महीपतिमौलिमाल्यानां धूलिभिरपि भूषितौ चासाते, तावेव तव चरणौ साम्प्रतं हरिण-विप्र-लुञ्चिताग्राणां कुशानां वने वने भ्रमत इत्यहो कष्टावसरः ॥ ४० ॥

भाषाऽर्थः—हर समय रत्नजटित पादुकाओं पर रखे हुए आपके पाँव नजराना देने के लिये आये हुए राजाओं के मस्तक की मालाओं के पराग से सुशोभित होते थे, वे ही आजकल हरिण और ब्राह्मणों से नोचे हुए कुशों के वन में चलते हैं ॥४०॥

ननु सर्वप्राणिसाधारण्यामापदि का परिदेवनेत्यत्राह—

द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः।
परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥

द्विषदिति। यद्यतः कारणादियं दशाऽवस्था। 'दशा वर्त्तावस्थायाम्' इति विश्वः। द्विषन्तो निमित्तं यस्या सा। 'द्विषोऽमित्रे' इति शतृप्रत्ययः। अतो मे मनः समूलं साशयमुन्मूलयतीवोत्पाटयतीव। दैविकी त्वापन्न दुःखायेत्याह—परैरिति। परैः शत्रुभिरपर्यासिताऽपर्यावर्तिता वीर्यसम्पद्येषां तेषां मानिनां पराभवो विद्युत्सव एवेति वैधर्म्येणार्थान्तरन्यासः। मानहानिर्दुःसहा, न त्वापदिति भावः ॥४१॥

अन्वयः—यत्, इयं, दशा, द्विषन्निमित्ता (तवास्ति), ततः, समूलं, मे, मनः, उन्मूलयति, इव। परैः, अपर्यासितवीर्यसम्पदां, मानिनां, पराभवः, अपि, उत्सवः, एव (भवति) ॥ ४१ ॥

सुधा—यत्=यस्मात्कारणात्, इयम्=वर्त्तमाना, वनवासरूपेति शेषः। दशा=अवस्था, द्विषन्निमित्ता=शत्रुहेतुकी, तव युधिष्ठिरस्य वर्त्तते, ततः=तस्मात्, समूलं साश्रयम्, मे=मम, द्रौपद्या इति शेषः। मनः=चित्तम्, उन्मूलयति=उत्पाटयति, इव। परैः=शत्रुभिः, अपर्यासितवीर्यसम्पदाम्=अपर्यावर्तितपौरुषसम्पत्तीनाम्, अनवरुद्धविक्रमाणामित्यर्थः। मानिनाम्=मनस्विनाम्, पराभवः=पराजय इत्यर्थः। अपि, उत्सवः=उद्भवः, हर्षोदयः एव भवति ॥ ४१ ॥

समास—द्विषन्तः निमित्तं यस्याः सा द्विषन्निमित्ता। मूलेन सह वर्त्तते इति समूलम्। न पर्यासिता अपर्यासिता, अपर्यासिता, वीर्यसम्पद् येषां ते अपर्यासितवीर्यसम्पदस्तेषामपर्यासितवीर्यसम्पदाम् ॥ ४१ ॥

व्याकरणम्—उन्मूलयति = उत् + मूल + णिच् + लट् ॥ ४१ ॥

वाच्यान्तरम्—यद् अनया दशया द्विषन्निमित्तया भूयते, ततः स मनसा उन्मूल्यते इव । परैरपर्यासितवीर्यसम्पदां मानिनां पराभवेणापि एव भूयते ॥ ४१ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । 'हेतुर्निमि बीजनिदानानि हेतौ स्युः' इति । 'दशा वर्त्तावस्थायाम्' इति विश्वः । चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । 'पराभवः परिभवः पराजय इ 'अथ क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः ॥ ४१ ॥

सारार्थः—यदीयं वर्त्तमानाऽवस्था दैवहेतुकी भवेत्तदा न तथा मनोहानि रिपुकृताऽवस्थेयमस्ति, अतो मम मन उन्मूलितमिवालक्षमनुभूयते । न दशायां मादृशानां जनानां प्राणा मनांसि तिष्ठन्ति, यन्मम मनो नो स्फुटति न बहिर्भवन्ति, तत्केवलं दुःखभोगहेतवे एवेति ज्ञायते । परन्तु भवन्तो स्ति, अतः शत्रुभिरतुलितविक्रमाणां भवतां दैवात्पराजयोऽपि हर्षोदय इव

भाषाऽर्थः—आपकी यह हालत शत्रुओं के कारण है; इसी से मेरा मन हुआ सा जान पड़ता है । शत्रुओं से अपराजित पौरुषसंपत्तिवाले मानी लिये पराभव भी उत्सव ही के समान मालूम पड़ता है ॥ ४१ ॥

विहाय शान्तिं नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥

विहायेति । हे नृप, शान्तिं विहाय तत्प्रसिद्धं धाम तेजो विद्विषां वधाय सन्धेह्यङ्गीकुरु प्रसीद । प्रार्थनायां लोट् । ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्य व्रजन्तीति । निःस्पृहा मुनयः शमेन क्रोधवर्जनेन सिद्धिं व्रजन्ति । भूभृतस्तु वधूय निर्जित्य । कैवल्यकार्यं तु शान्तिसाध्यमित्यर्थः ॥ ४२ ॥

अन्वयः—हे नृप, शान्तिं, विहाय, विद्विषां, वधाय, पुनः, तत्, धाम, स प्रसीद । निःस्पृहाः, मुनयः, शत्रून्, अवधूय, शमेन, सिद्धिं, व्रजन्ति । ( कि भूभृतः ( तथा ) न ॥ ४२ )

सुधा—हे नृप = राजन्, युधिष्ठिर ! शान्तिम् = क्षमाम्, सकलापमानदु सहनशीलरूपामित्यर्थः, विहाय = त्यक्त्वा, विद्विषाम् = वैरिणाम्, दुर्योधनाद मित्यर्थः । वधाय = नाशाय, पुनः = भूयः, तत् = स्वकीयं पौर्विकमित्यर्थः । ध तेजः, सन्धेहि = अङ्गीकुरु, प्रसीद । यतो न हि शान्त्या शत्रून् विजित्य सि लभते कश्चिदित्याह—निःस्पृहाः = निरीहाः, अकामा इति यावत् । मुनयः संयमिनः, शत्रून् = कामादीन्, अवधूय = तिरस्कृत्य, दूरीकृत्य, शमेन = शान्त सिद्धिम् = अभिलाषपूर्तिम्, व्रजन्ति = यान्ति । भूभृतः = राजानः तथा शान्त न सिद्धिं व्रजन्तीति ॥ ४२ ॥

समासः—निर्गता स्पृहा येषां ते निःस्पृहाः । भुवं बिभ्रतीति भूभृतः ॥ ४२ ॥

व्याकरणम्—विहाय=वि+हा+क्त्वा+ल्यप् । सन्धेहि=सम्+धा+लोट् । प्रसीद=प्र+सद्+लोट् । अवधूय=अव+धूञ्+क्त्वा+ल्यप् । व्रजन्ति=व्रज्+लट् ॥ ४२ ॥

वाच्यान्तरम्—हे नृप ! शान्तिं विहाय विद्विषां वधाय पुनः तद् धाम (त्वया) सन्धीयताम्, प्रसद्यताम्, निःस्पृहैर्मुनिभिः शत्रून् अवधूय शमेन सिद्धिर्व्रज्यते । किन्तु भूभृद्भिस्तथा न सिद्धिर्व्रज्यते ॥ ४२ ॥

कोषः—'शमनन्तु शमः शान्तिः' इत्यमरः । 'गृह-देह-त्विट्-प्रभावा धामानि' इत्यमरः ॥ ४२ ॥

सारार्थः—यतो हि प्रजापालनं राजसं कर्म, तत्सात्विक्या धिया न सम्पद्यते, सात्विक्या धिया तु योगसिद्धिः क्रियते योगिभिः । तेन भवता मुनियोग्यां शान्तप्रकृतिं दूरीकृत्य, तत्काले शत्रुशातनाय राजसमुग्रं तेजः सङ्गृह्यताम्, येन स्वहस्तभ्रष्टराज्याधिगमः पुनः सम्भवेत् । अन्यथैवं मुनिवृत्त्या वनवाससुखमन्तरा नान्यत्प्रजाधिपत्यादि सौभाग्यं लभ्यते ॥ ४२ ॥

भावाऽर्थः—हे महाराज ! युधिष्ठिर, आप इस सहनशीलता को छोड़कर (जैसी महाराज लोगों की होती है ) शत्रुओं का संहार करने के लिए उस तेज को फिर धारण कीजिए । आप जो समझते हैं कि 'ऐसी ही प्रकृति अच्छी है, इसी से सब होगा' सो कभी नहीं । ऐसी प्रकृति से मुनि लोग अपने काम-क्रोध आदि शत्रु को दूर कर योग-सिद्धि करते हैं । राजा-महाराज तो केवल क्षात्रधर्म ( उग्रधर्म ) से ही शत्रुओं को परास्त करके सिद्धि पाते हैं ॥ ४२ ॥

पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥ ४३ ॥

पुर इति । किं च धामवतां तेजस्विनाम् । परनिकारासहिष्णूनामित्यर्थः । पुरः सरतीति पुरःसरा अग्रेसराः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । यशोधना भवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषमधिकुर्वते स्वीकुर्वते चेत्तर्हि । हन्त इति खेदे । मनस्विताऽभिमानता निराश्रया सती हता । तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्याप्रसक्तेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति । 'प्रसहनं परिभवः' इति काशिका । तथाऽप्यस्याकर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः—' इत्यात्मनेपदं प्रसिद्धम् ॥ ४३ ॥

अन्वयः—चेत्, धामवतां, पुरःसराः, यशोधनाः, भवादृशाः, ( जनाः ) सुदुःसहम्, ईदृशं, निकारम्, प्राप्य, रतिम्, अधिकुर्वते, ( तदा ) हन्त ! मनस्विता, निराश्रया, ( सती ) हता ॥ ४३ ॥

सुधा—चेद् = यदि, धामवताम् = तेजोवताम्, तेजस्विनामिति भावः । पुरःसराः = अग्रगण्याः, यशोधनाः = कीर्त्तिवित्ताः, भवादृशाः = त्वादृशाः, युधिष्ठिरोपमा महामहिमवन्तो राजान इति शेषः । सुदुःसहम् = अतिदुःसहम्, ईदृशम् = एवंविधम्, निकारम् = शत्रुकृततिरस्कारमिति भावः । प्राप्य = लब्ध्वा, रतिं = तुष्टिम्, अधिकुर्वते = अङ्गीकुर्वन्ति, तदा = अङ्गीकारे कृते, हन्त ! = खेदे, मनस्विता = स्वतन्त्रता, निराश्रया, = निराधारा, सती, हता = मृतेति । मनस्विजनाभावात्क्व तिष्ठतु वराकी मनस्विनाऽस्त आश्रयाभावाद्विवङ्गतेति भावः ॥ ४३ ॥

समासः—पुरः सरन्तीति पुरःसराः । धाम विद्यते येषां ते धामवन्तः, तेषां धामवताम् । यशांसि एव धनानि येषां ते यशोधनाः । निर्गत आश्रयो यस्याः सा निराश्रया । मनस्विनो भावो मनस्विता ॥ ४३ ॥

व्याकरणम्—प्राप्य = प्र + आप् + क्त्वा + ल्यप् । अधिकुर्वते = अधि + कृ + लट् + झि । पुरःसराः = पुरः + सृ + टः । सुदुःसहम् = सु + दुस् + सह + णमुल् । हता = हन् + क्तः + टाप् ॥ ४३ ॥

वाच्यान्तरम्—चेद् धामवतां पुरःसरैः यशोधनैः भवादृशैः ईदृशं सुदुःसहं निकारं प्राप्य रतिः अधिक्रियते तदा हन्त, मनस्वितया निराश्रितया हतया भूयते ॥ ४३ ॥

कोषः—'पुरःसरा अग्रगण्या धुरीणाश्च पुरोगमाः' इति कोषः । 'निकारो हि तिरस्कारोऽपमानश्च पराभवः' इति ॥ ४३ ॥

सारार्थः—येषां नहि विद्यते तेजः, नहि यशो लब्धुमिच्छा वर्त्तते, ते यद्येवं कर्णे तूलं तैलं च निक्षिप्य 'यद्भवतु, तद्भवतु, यो हि यथा करिष्यति स तादृक् फलं भोक्ष्यति' इत्थं स्वमनसि धृतिं कृत्वा शत्रोरप्यपमानं सम्मानमिव अनुभवन्ति, तेषां तु तद्युक्तमेव, यतस्ते तेजोविहीनाः, यशोधना नहि सन्ति; भवन्तस्तु तथा न, किन्तु ये जगति तेजस्विनस्तेषामग्रगण्याः यशोधनाश्च सन्ति, तदा कथमेवं प्रकृतिप्रतिकूलं विचारं पालयन्ति भवन्तः । एवं चेत्तदा मनस्विता भूमौ स्वाश्रयविहीना सती स्वर्गमेव गमिष्यति ॥ ४३ ॥

भाषाऽर्थः—अगर तेजस्वियों के आगे गिनने लायक, यशरूपी धनवाले आप लोगों के ऐसे महापुरुष इस तरह अत्यन्त दुःसह दुःख पाकर भी चुपचाप बैठे रहेंगे तो हाय ! मनस्विता बेचारी मानो निरवलम्ब होकर खतम ही हो गई ॥ ४३ ॥

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥ ४४ ॥

अथेति । अथ पक्षान्तरे । निरस्तविक्रमः सन् । चिराय चिरकालेनापि क्षमां शान्तिमेव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सुखस्य साधनं पर्येष्यवगच्छसि तर्हि

लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धरः पचाद्यच् । जटानां धरो जटाधरः सन्निह वने । पावकं जुहुधि पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनुषेत्यर्थः । 'हुझल्भ्यो हेर्धिः' ॥ ४४ ॥

अन्वयः—अथ, निरस्तविक्रमः ( सन् ), चिराय, सुखस्य, साधनं, क्षमाम्, एव, पर्यैषि, ( तदा ) लक्ष्मीपतिलक्ष्म, कार्मुकं, विहाय, जटाधरः, सन्, इह पावकं, जुहुधि ॥ ४४ ॥

सुधा—अथ = यदि, निरस्तविक्रमः = उत्साहहीनः, सन्, त्वम्; चिराय = चिरकालम्, सुखस्य = आनन्दस्य, साधनम् = सहायकम्, क्षमाम् = शान्तिम्, एव = निश्चयेन, पर्यैषि = अवगच्छसि, जानासीति भावः । तदा, लक्ष्मीपतिलक्ष्म = राजचिह्नम्, कार्मुकम् = धनुः, विहाय = परित्यज्य; जटाधरः = सम्बद्धकेशधारी सन्, इह = वने, पावकम् = अग्निम्, जुहुधि = होमं, कुरु, तव कार्यविरुद्धं देहलक्षणमस्ति । लक्षणन्तु राजार्हम्, कार्यन्तु योगियोग्यम् ॥ ४४ ॥

समासः—निरस्तः विक्रमो येन सः, निरस्तविक्रमः । लक्ष्म्याः पतिः लक्ष्मीपतिः, लक्ष्मीपतेः लक्ष्म यस्मिन् तत् लक्ष्मीपतिलक्ष्म । जटानां जरो धटाधरः ॥ ४४ ॥

व्याकरणम्—पर्यैषि = परि + इण् + लट् + सिप् । विहाय = वि + हा + क्त्वा + ल्यप् । जुहुधि = हु + लोट्-मध्यमपुरुषैकवचने ॥ ४४ ॥

वाच्यान्तरम्—अथ निरस्तविक्रमेण सता त्वया चिराय सुखस्य साधनम् क्षमा एव परीयते तदा लक्ष्मीपतिलक्ष्म कार्मुकं विहाय, जटाधरेण सता त्वया इह पावकः हूयताम् ॥ ४४ ॥

कोषः—'क्षितिक्षान्त्योः क्षमा' इत्यमरः । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । 'स्यादानन्दथुरानन्दः शर्मशातसुखानि च' इत्यमरः । 'शरासनं कार्मुकं च चापं धनुरपीर्यते' इति । 'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः' इत्यमरः ॥ ४४ ॥

सारार्थः—नो चेत् त्वं क्षमाऽवलम्बनेनैव स्वाभीष्टसिद्धिर्भविष्यतीति जानासि, तदा क्षमावलम्बनानुचितं क्षात्रतेजोधरोचितमिदं लुलद्धनुस्त्यज । प्रत्युत, क्षमावलम्बनोचितां जटां धृत्वा, सर्वं राजचिह्नं विहाय वनेऽग्निहोत्री भव, नहि शान्तिमता धनुर्ध्रियते केनापीति ॥ ४४ ॥

भावार्थ—अगर आप पराक्रम को दूर कर केवल शान्ति को ही सुख का साधन ( सहायक ) समझते हैं, तो आप राजचिह्नस्वरूप इस धनुष को दूर कर और जटा बढ़ा करके अग्नि में हवन कीजिये ॥ ४४ ॥

अथ समयोल्लङ्घनाद् बिभेषि तदपि न कश्चिदित्याह—

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ॥४५॥

नेति । परेषु शत्रुषु । निकृतिः परं प्रधानं येषु तेषु तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयस्त्रयोदशसंवत्सरान् वने वत्स्यामीत्येवंरूपा संवित् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । तस्य परिरक्षणं प्रतीक्षणं न क्षमं युक्तम् । 'युक्तं क्षमं शक्ते हिते त्रिषु' इत्यमरः । हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपटं यथा तथा । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । सन्धिदूषणानि विदधति । केनचिद्व्याजेन दोषमापाद्य सन्धिं दूषयन्ति । विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा कार्यसाधनं प्रधानमन्यत्समयरक्षणादिकमशक्तस्येति भावः । अर्थान्तरन्यासोऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ४५ ॥

अन्वयः—निकृतिपरेषु, परेषु, भूरिधाम्नः, ते समयपरिरक्षणं न, क्षमम् । हि विजयार्थिनः, क्षितीशाः, अरिषु, सोपधि, सन्धिदूषणानि, विदधति ॥ ४५ ॥

सुधा—निकृतिपरेषु = निराकरणतत्परेषु, अपकारकेष्वित्यर्थः । परेषु = शत्रुषु, भूरिधाम्नः = बहुतेजसः, ते = तव, युधिष्ठिरस्येत्यर्थः । समयपरिरक्षणं = कालप्रतीक्षाकरणम्, त्रयोदशवर्षाणि वने वत्स्यामीत्येवंरूपमित्यर्थः । न = नहि, क्षमम् = युक्तम्, नोचितमित्यर्थः । हि = यतः, यस्मात् , विजयार्थिनः = शत्रुपराजयकामुकाः, क्षितीशाः मेदिनीपतयः, राजान इत्यर्थः । अरिषु = शत्रुषु, सोपधि = सव्याजम्, छलेन सहितमिति यावत् ; सन्धिदूषणानि = मैत्रीच्छिद्राणि, विदधति = कुर्वन्ति, केनापि कपटेन सन्धिं भेदयन्तीति भावः ॥ ४५ ॥

समासः—निकृतिः परं येषां ते निकृतिपराः, तेषु निकृतिपरेषु । भूरि धाम यस्य तस्य भूरिधाम्नः । समयस्य परिरक्षणं समयपरिरक्षणम् । विजयस्यार्थः प्रयोजनं अस्त्येषां ते विजयार्थिनः क्षितेः ईशाः क्षितीशाः । सन्धेर्दूषणानि सन्धिदूषणानि, तानि ॥ ४५ ॥

व्याकरणम्—विदधति = वि + धा + लट् + झि ॥ ४५ ॥

वाच्यान्तरम्—निकृतिपरेषु परेषु भूरिधाम्नः ते तव समयपरिरक्षणेन नहि क्षमेण भूयते । हि विजयार्थिभिः क्षितीशैररिषु सोपधि सन्धिदूषणानि विधीयन्ते ॥ ४५ ॥

कोषः—'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।' 'कुसृतिनिकृतिः शाठ्यम्' इति चामरः । 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । 'पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इत्यमरः ॥ ४५ ॥

सारार्थः—द्यूतपराजितस्य भवतः त्रयोदशवर्षात्मके काले वने निवासस्तद्दैवोचितो, यदि स दुर्योधनो न्यायवेत्ता, परन्तु स च महान् कपटपटुः, सततं भवतां छिद्रमन्विष्यन् हन्तुं यतते । एवम्भूते शत्रौ कालप्रतीक्षाकरणं महदनुचितम्, यदि कोऽपि दुर्बलो वैरिकृतापराधप्रतीकारेऽक्षमः शत्रुतः शङ्कितो भवेत् , तस्योचितमेव, भवन्तस्तु तत्प्रतीकारकरणसमर्थाः सन्ति । ईदृशदशायां कपटिषु वैरिषु कपटमेव विधाय सहसा सन्धिर्भेद्यः । 'शठे शाठ्यं समाचरेत्' ॥ ४५ ॥

भाषाऽर्थः—सदा कपट ( दगा ) करने वाले दुश्मनों से समय की प्रतीक्षा करते रहना ठीक नहीं; क्योंकि जय की इच्छा रखने वाले राजा लोग छल से दुश्मनों की सन्धि तोड़कर सत्यानाश करते हैं। आप तो निश्चिन्त हैं, यह ठीक नहीं है ॥४५॥

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति—

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये प्रथमः सर्गः ॥ १ ॥

---

विधीति । विधिर्दैवम् । 'विधिर्विधाने दैवे च' इत्यमरः । समयः कालस्तयोर्नियोगान्निर्यमनाद्धेतोः । तयोर्दुरतिक्रमत्वादिति भावः । अगाधे दुस्तरे । आपत्पयोधिरिवेत्युपमितसमासः । दिनकृतमिवेति । वक्ष्यमाणानुसारात्तस्मिन्नापत्पयोधौ मग्नम् । सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः । दीप्तिः प्रताप आतपश्च तस्याः संहारेण जिह्ममप्रसन्नम् । शिथिलवसुं शिथिलधनमन्यत्र शिथिलरश्मिम् । 'वसु देवेऽग्नौ रश्मौ च वसु तोये धने मणौ' इति वैजयन्ती । 'शिथिलबलम्' इति पाठे तूभयत्रापि शिथिलशक्तिकमित्यर्थः । रिपुस्तिमिरमिवेति रिपुतिमिरमुदस्य निरस्योदीयमानमुद्यन्तम् । 'इङ् गतौ' इति धातोर्दैवादिकात्कर्तरि शानच् । त्वां दिनादौ दिनकृतमिव लक्ष्मीर्भूयः समभ्येतु भजतु । 'आशिषि लिङ्लोटौ' इति लोट् । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः । यथाह भगवान्भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति । पूर्णोपमेयम् । मालिनी वृत्तम् । सर्गान्तत्वाद्वृत्तभेदः । यथाह दण्डी 'सर्गैरनतिविस्तीर्णैः श्रव्यमुक्तैः सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ॥' इति ।

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति—इतीत्यादि । इतिशब्दः परिसमाप्तौ । भारविकृताविति कविनामकथनम् । महाकाव्य [illegible] महच्छब्देन लक्षणसम्पत्तिः सूचिता । किरातार्जुनीये इति काव्यवर्णनीयकथनम् । प्रथमः सर्गः समाप्त इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् । किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम् । 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति छप्रत्ययः । राघवपाण्डवीयमितिवत् । तथा ह्यर्जुन एवात्र नायकः । किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः । यथाह दण्डी 'वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि तज्जयान्नायकोत्कर्षकथनं च धिनोति नः' इति । अथात्र [illegible]—

'नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजस्तस्योत्कर्षंकृते त्ववर्ण्यतरां द्विष्यः किरातः पुनः। शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्' इति ॥ ४६ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः समाप्तः ॥ १ ॥



अन्वयः—लक्ष्मीः (कर्त्री) विधिसमयनियोगात्, दीप्तिसंहारजिह्मम्, शिथिलवसुम्, अगाधे, आपत्पयोधौ, मग्नम्, दिनादौ रिपुतिमिरम्, उदस्य, उदीयमानं, दिनकृतम्, इव, त्वाम्, भूयः समभ्येतु ॥ ४६ ॥

सुधा—लक्ष्मीः = राजलक्ष्मीः, पक्षान्तरे, तेजःश्रीः; विधिसमयनियोगात् = दैवकालानुरोधात्, दुर्भाग्यदुःसमयप्रभावादित्यर्थः। वा दैवसमयानतिक्रमणात्, दीप्तिसंहारजिह्मम्=कान्तिहानिखिन्नम्, पक्षान्तरे तेजोविनाशशिथिलम्। शिथिलवसुम्=मन्दतेजसम्। पक्षान्तरे क्षीणधनम्, अगाधे = अतलस्पर्शे, दुस्तरे इत्यर्थः। पक्षान्तरे अपरिमेये, आपत्पयोधौ = विपत्समुद्रे, पक्षान्तरे विपद्रूपकेऽर्णवे, मग्नम् = निमज्जमानम् दिनादौ = प्रभाते, पक्षान्तरे शुभसमयसमागमे, रिपुतिमिरम्=वैरिरूपान्धकारम्, उदस्य = निरस्य, संहृत्येत्यर्थः। उदीयमानम् = उद्यन्तम्, पक्षान्तरे-उन्नत्यभिमुखगमनशीलम्, दिनकृतम् = सूर्यम्, इव त्वाम् = भवन्तम्, युधिष्ठिरम्, भूयः= पुनः, समभ्येतु = भजतु, गच्छतु इति भावः ॥ ४६ ॥

समासः—विधिश्च समयश्च विधिसमयौ, तयोः विधिसमयोर्नियोगः, विधिसमयनियोगस्तस्माद्विधिसमयनियोगात्। वा विधेः समयः ( सिद्धान्तः ) विधिसमयस्तस्य नियोगस्तस्मात्। दीप्तेः संहारो दीप्तिसंहारस्तेन जिह्म इति दीप्तिसंहारजिह्मस्तं दीप्तिसंहारजिह्मम्। शिथिलं वसु यस्य सः शिथिलवसुस्तं शिथिलवसुम्। आपत् पयोधिरिवेत्यापत्पयोधिः तस्मिन् आपत्पयोधौ। रिपुस्तिमिरमिव इति रिपुतिमिरम्। दिनस्यादिर्दिनादिस्तस्मिन् दिनादौ ॥ ४६ ॥

व्याकरणम्—मग्नम्=मस्ज्+क्तः। उदस्य = उत्+असु+क्त्वा+ल्यप्। उदीयमानम् = उदीयतेः शानच्। समभ्येतु = सम्+अभि+इण्+लोट् ॥ ४६ ॥

वाच्यान्तरम्—लक्ष्म्या विधिसमयनियोगात् दीप्तिसंहारजिह्मः शिथिलवसुः, अगाधे आपत्पयोधौ मग्नः, रिपुतिमिरमुदस्य दिनादावुदीयमानस्त्वं दिनकृत् इव, समभीयस्व ॥ ४६ ॥

कोषः—'विधिर्दैवे विधाने च' इत्यमरः । 'वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ' इति वैजयन्ती । 'अगाधमतलस्पर्शं' इत्यमरः । स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः ॥ ४६ ॥

सारार्थः—यथा सन्ध्यासमये समागते सूर्यो दैवसमयप्रभावेण किरणसंहरणकारणेन खिन्नः, समुद्रे निमग्नः, तेजोविहीनो भवति, यथा च प्रभाते उपस्थितेऽन्धकारं संहृत्योदयं प्राप्नोति तथैव द्यूतक्रीडावसाने दुर्दैवकालानुसारेण संहृतसर्वस्वः, कान्तिहीनः अपारविपत्समुद्रेऽधुनाऽवधि निमग्नोऽसि । अतः पुनः सुदिने प्राप्ते झटिति दुर्योधनप्रभृतिवैरिगणान् संहृत्य स्वकीयपूर्वजाश्रितां राजलक्ष्मीं [illegible] ॥

भाषाऽर्थः—जैसे विधि और समय के प्रभाव से कान्ति के नाश होने के कारण खिन्न और किरणहीन, शाम को विपत्तिरूप महासागर में डूबकर, सुबह फिर अन्धकाररूपी दुश्मन को चौपट कर उदय होते हुए सूर्य को शोभा अपनाती है, वैसे ही पहले जुआ में दैव और काल की प्रेरणा से अपने विचार और तेज के अभाव से दुर्दशा को प्राप्त आपद्रूप महार्णव में डूबे हुए फिर भी अपने दुश्मनों को मारकर अभ्युदय की इच्छा रखने वाले आपको राजलक्ष्मी अपनावे ॥ ४६ ॥

सुधा—इतिशब्दः सर्गपरिसमाप्तिसूचकः भारविकृतावनेन ग्रन्थकारेण स्वनामोल्लेखनं कृतं (१) महाकाव्यमितिशब्देन इदं प्रारभ्यमानं महद्भविष्यति । किरातार्जुनीय इति–काव्यवर्णनीययोः पात्रयोः प्रधानतया नामपरिचयः । शेषं सुगमम् । किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम् । प्रतिसर्गान्ते—सर्गान्तःपातिपद्येभ्यो भिन्नपद्यस्य निवेशः काव्यलक्षणसूचकः, यथोक्तम् 'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः' । पद्यमेतन्मालिनीनामकम् , यथोक्तं छन्दोमञ्जर्याम्—'ननमयययुतेयं मालिनीभोगिलोकैः' । अनेन लक्षणमुदाहरणञ्चैतदुभयमपि तत्र निगदितम् । तत्र तावद् 'गण' शब्देन वर्णत्रयं गृह्यते, यथा—विमलं कमलं वराकी सिंहनी, जरठो वृषभ इत्यादि ॥ अत्र वर्णत्रये यदि सर्वे गुरवस्तदा 'मगणः' प्रोच्यते, स यथा, राजानः, देवेशाः, गौरीशाः, भानुधाता । तत्र गुरुबोधकम् = ऽ, लघुबोधकम् = ।, मगणः = ऽऽऽ, यथा कालिन्दी, यत्रादिमो लघुर्मध्यान्त्यौ गुरू, स यगणः = ।ऽऽ, इत्यादि, एषां सोदाहरणनामानि प्रदर्श्यन्ते—

---

(१) सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते । क्वचिन्निन्दा खलादीनां सतां च गुणवर्णनम् ।
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह । नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते

| गणनाम | लक्षणं | उदाहरणम् |
|---|---|---|
| मगणः | SSS | मान्धाता |
| यगणः | ISS | भवानी, हिमानी, सुशीला, सलीला, |
| रगणः | SIS | शैलजा, कालिका, तारिणी, जानकी, |
| सगणः | IIS | गिरिजा, दयिता, विधिना, मुनिना, |
| तगणः | SSI | देवेश, गौरीश, |
| जगणः | ISI | कदापि, गणेश महेश, उमेश, |
| भगणः | SII | पादप, नारद, यादव, भारत, |
| नगणः | III | नयन, कमल, अमल, परम, |



तत्र पूर्वोक्तलक्षणेन यत्र पद्यपादे नयनमयया गणाः, तयाऽष्टभिस्ततः सप्तभि र्वर्णविश्रामस्तन्मालिनीसंज्ञम् ।

यथाऽत्र तल्लक्षणे एव गणान् विरच्य प्रदर्श्यते—

| न | न | म | य | य |
|---|---|---|---|---|
| I I I | I I I | S S S | I S S | I S S |

'न न म य य युतेयं मालिनी भोगिलोकैः' स्वरूपदर्शनेन गणविन्यासः स्फुटः । तथा च 'ननमयययुतेयम्' एतावन्तो वर्णा एकहेलयोच्चार्यन्ते, तदा तदन्ते विश्राम उचित एव । ततः पादान्तं यावदेकहेलयाऽष्टभिः पूर्वं पश्चात्सप्तभिर्विश्राम इति स्फुटमस्ति । एवं सर्वेषां छन्दसां लक्षणं ज्ञातव्यमिति ॥ ४६ ॥

श्रीगङ्गाधरशर्मणा विरचितया सुधाभिधया व्याख्यया विभूषिते
किरातार्जुनीयकाव्ये प्रथमः सर्गः समाप्तः ।

---

(18)